॥ श्रीः ॥

॥ श्रियै त्रैलोक्यसुन्दर्यै नमः ॥

# देवीमाहात्म्यम्

गाणपत्येन सङ्गमेश्वरोपाध्यायेन
बहूनां दाक्षिणात्यकोशपाठानामनुसारेण
परिष्कृत्य संशोधितम् ॥

EDITED & PUBLISHED BY

R. SUBRAHMANYA VADHYAR,
BOOK-SELLER & PUBLISHER,
KALPATHI—PALGHAT
1929

Library Edition ] [Price 1 Re.

|| श्रीः ||

|| प्रस्तावना ||

इदं खलु शब्दतोऽर्थतश्च अतिगम्भीरं महामन्त्रमयं अनिर्वचनीयमाहात्म्यं देवीमाहात्म्यं नाम पारायणग्रन्थः सर्वत्र भारतवर्षे प्रसिद्धः । तस्य च दक्षिणदेशीयः पाठो नाद्य यावत् मुद्रणेन प्रकाशितः । तस्मादयं ग्रन्थः साम्प्रतमस्माभिः बहूनां तालपत्रग्रन्थानां विमर्शनेन अनेकेषां पण्डितानां साहाय्येन च संशोध्य प्रकाश्यते ॥

उवाचमन्त्रः, अर्धमन्त्रः, श्लोकमन्त्रः इत्येवंप्रकारैः सप्तशतसङ्ख्यैः मन्त्रैः सङ्घटितोऽयं ग्रन्थः उत्तरदेशीयैः 'सप्तशती' इति व्यवह्रियते ।

तत्क्रमानुसारेणैव अस्माभिरिह तत्तदध्यायान्ता-
मन्ते मन्त्रसङ्ख्या निर्दिष्टाः । वस्तुतस्तावदयं
क्रमः चण्डीयागेऽनुसर्तव्यः । एतद्विषयका
विशेषाश्च गुरुमुखादेव ज्ञातव्याः ॥

दक्षिणदेशीयेषु तालपत्रग्रन्थेषु तत्र तत्र
कथानुगुणाः सन्दर्भोचिताश्च केचिन्मन्त्राः अधि-
कतयोपलभ्यन्ते । ते चास्मिन् ग्रन्थे [ ] एत-
च्चिह्नाभ्यन्तरे संयोजिताः ॥

इत्थमत्युत्कृष्टस्यास्य ग्रन्थस्य परिष्करणे
प्रेमपुरस्सरं साहाय्यं कृतवतां बहूनां पण्डितवर्या-
णां तत्रापि विशिष्य संशोधनभारसर्वस्वं
निरूढवतां गाणपत्यानां सङ्गमेश्वरोपाध्यायानां
च पुरस्तात् सादरं कृतज्ञतां प्रकटयामः ॥

|| विषयानुक्रमणिका ||

## ॥ देवीमाहात्म्यपारायणविधानम् ॥

---

गाणपत्येन सङ्गमेश्वरोपाध्यायेन
संगृहितम्

---

गजाननमहं वन्दे गजासुरनिबर्हणम् ।
सिद्धिबुद्धियुतं देवं भक्तविघ्नभयापहं ॥ १ ॥

महाकाळी महालक्ष्मीर्महावाणीति या स्मृता ।
साऽस्मान् पातु महादुर्गा समस्तापन्निवारिणी ॥

नवांगं वा त्रयांगं वा जपित्वा च नवाक्षरीम् ।
ततो जप्त्वा रात्रिसूक्तं दुर्गासप्तशतीं पठेत् ॥

केवलं पाठमात्रे तु तान्त्रिकं सूक्तमुच्यते ।
होमांगपाठे होमे च वैदिकं तु प्रयोजयेत् ॥

रात्रिसूक्तं रात्रिदेवीमिति श्लोका नव स्मृताः ।
लक्ष्मीशेति नव श्लोकाः देवीसूक्तं प्रचक्ष्यते ॥ ५ ॥

एकावृत्तावशक्तस्य *कंगाळीति त्रिभिर्दिनैः ।
तदशक्तः पठेदेवं *पाठोऽयं द्विप्रकारतः ॥ ६ ॥

---

* दिनत्रयपाठे सङ्ख्याक्रमः—

प्रथमदिने — कं = १ अध्यायः
द्वितीयदिने — गा = ३ अध्यायाः
तृतीयदिने — ळी = ९ अध्यायाः
१३

* अस्य विवरणं ३ पुटे दृश्यताम् ॥

चण्डीपाठफलं देवि शृणुष्व गदतो मम ।
सङ्कल्प्य पूज्यां संपूज्य न्यस्यांगेषु मनून्सकृत् ॥
एकावृत्यादिपाठानां प्रत्यहं पठतां नृणाम् ।
एकावृत्या द्विरावृत्या पापो रोगो विनश्यति ॥ ८ ॥
उपसर्गोपशान्त्यर्थं पञ्चावृत्तं वरानने ।
महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत् ॥ ९ ॥
नवावृत्या भवेच्छान्तिः मुच्येत् प्राणार्तिजाड्यात् ।
राजवश्याय भूत्यै च रुद्रावृत्तं पठेन्नरः ॥ १० ॥
अर्कावृत्या वैरिनाशः स्वेष्टसिद्धिश्च जायते ।
मन्वावृत्या रिपुर्वश्यः नरो नारी च मुच्यते ॥
सौख्यं पञ्चदशावृत्या महतीं श्रियमाप्नुयात् ।
कलावृत्या पुत्रपौत्रधनधान्यसमृद्धयः ॥ १२ ॥

राजभीतिविनाशाय शत्रोरुच्चाटनाय च ।
कुर्यात् सप्तदशावृत्तं तथाष्टादशकं प्रिये ॥ १३ ॥
महाऋणविमोक्षाय विंशावृत्तं पठेन्नरः ।
पञ्चविंशाव नात्र भवेत् बन्धविमोक्षणम् ॥ १४ ॥
अष्टाविंशतिवारेण चाष्टदारिद्र्यनाशनम् ।
अष्टैश्वर्यसमृद्धिश्च षट्त्रिंशद्वारपाठतः ॥
सङ्कटे समनुप्राप्ते दुश्चिकित्साभये सदा ।
जातिध्वंसे कुलोच्छेदे चायुषो नाश आगते ॥
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथाक्षये ।
तथैव त्रिविधोत्पाते महापातेऽतिपातके ॥ १७ ॥
कुर्याद्यत्नाच्छतावृत्तं तथा सम्पद्यते शुभम् ।
विपदस्तस्य नश्यन्ति वृद्धिमायान्ति सम्पदः ॥

राज्यवृद्धिः शतावृत्या ततो याति पराङ्गतिम् ।
मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ॥

शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ।
सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥ २० ॥
प्राप्तो मनोगतान् कामान् नरो मोक्षमवाप्नुयात् ।

यथाश्वमेधः क्रतुषु देवानां च यथा हरिः ।
स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ॥ २१ ॥

अथवा बहुनोक्तेन किमन्येन वरानने ।
चण्ड्याश्शतावृत्तिपाठात् सर्वास्सिद्ध्यन्ति सिद्धयः

॥ इति देवीमाहात्म्यपारायणविधानम् ॥

श्री गणेश शारदा गुरुभ्यो नमः ।

ॐ नमश्चण्डिकायै ।

## ॥ श्री देवीमाहात्म्ये नवांगप्रारंभः ॥

### अथ पारायणक्रमः ।

न्यासमावाहनञ्चैव नामान्यर्गलकीलके ।
हृदयञ्च दलञ्चैव ध्यानं कवचमेव च ॥
माहात्म्यञ्च जपेन्नित्यं अष्टम्यान्तु विशेषतः । *
सौभाग्यं लभते नित्यं नरो मुच्येत सङ्कटात् ॥

---

माहात्म्यञ्च जपेन्नित्यं पाठोयं द्विप्रकारतः । *
इह लोके सुखं स्थित्वा चान्ते सायुज्यमाप्नुयात् ॥
इति पाठभेदः ।

श्री गणेश गुर्वादि इष्टदेवता प्रार्थना—

ततः नित्यपाठसंकल्पः—अस्माकं सर्वेषां सकुटुं-

---

पाठोयं द्विप्रकारतः—वारक्रमेण अध्याय-पठनक्रमः इह सूच्यते । तद्यथा—

| | | | | |
|---|---|---|---|---|
| भानुवारे | — | पा | = | १ अध्यायः |
| सोम | — | ठो | = | २ अध्यायौ |
| भौम | — | यं | = | १ अध्यायः |
| बुध | — | द्वि | = | ४ अध्यायाः |
| गुरु | — | प्र | = | २ अध्यायौ |
| शुक्र | — | का | = | १ अध्यायः |
| स्थिर | — | र | = | २ अध्यायौ |
| ७ वाराः | | | | १३ अध्यायाः |

वानां क्षेमस्थैर्यायुरारोग्यैश्वर्याणामभिवृद्ध्यर्थं समस्तमंगलावाप्त्यर्थं नक्षत्रे राशौ जातस्य——शर्मणः मम श्रीजगदंबाप्रसादेन सर्वापान्निवृत्तिसर्वाभीष्टफलावाप्तिधर्मार्थकाममोक्षचतुर्विधफलपुरुषार्थसिद्धिद्वारा श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं नवांगपूर्वक देवीमाहात्म्य पठनं करिष्ये ॥

अथ नवाक्षरीमन्त्रविधानम् ।

अस्य श्री नवाक्षरीमहामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः। गायत्र्युष्णिगनुष्टुपूच्छन्दांसि । श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । नन्दाशाकंभरीभीमाः शक्तयः । रक्तदन्तिका दुर्गा भ्रामर्यो बीजानि । अग्निवायुसूर्यास्तत्वानि । श्रीमहा-

काळी महालक्ष्मी महासरस्वती प्रीत्यर्थं नवाक्षरी महामन्त्रजपे विनियोगः ॥

अथ मूलषडंगन्यासः ।

ॐ ऐं अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ क्लीं मध्यमाभ्यां नमः । ॐ चामुंडायै अनामिकाभ्यां नमः । ॐ विच्चे कनिष्ठिकाभ्यां नमः । ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे करतलकरपृष्ठाभ्यां नमः । ओं ऐं हृदयाय नमः । ओं ह्रीं शिरसे स्वाहा । ओं क्लीं शिखायै वषट् । ओं चामुण्डायै कवचाय हुं । ओं विच्चे नेत्रत्रयाय वौषट् । ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्। भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

अथ ध्यानम् ।

विद्युद्दामसमप्रभां मृगपतिस्कंधस्थितां भीषणां
कन्याभिः करवाळखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रदराळिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां
भजे ॥

अथवा—

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निसुंभापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेंबिके ॥

मानसोपचारैःसंपूज्य – अष्टोत्तरशतं मूलमन्त्रं जपेत् ॥

मूलमन्त्रः – 'ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे' नमः ॥

## अथ न्यासः ।

अस्य श्री न्याससमहामन्त्रस्य मार्कण्डेय ऋषिः । अनुष्टुप् छन्दः । महाकालीमहा-लक्ष्मीमहासरस्वती देवता । ह्रीं श्रीं क्लीं

बीजानि । इष्टार्थसिद्ध्यर्थे जपे विनियोगः । पादयोः वाराह्यै नमः । जङ्घयोः ब्रह्माण्यै नमः । ऊर्वोः रुद्राण्यै नमः । नितंबे नारसिंह्यै नमः । नाभौ चामुण्डायै नमः । जठरे पार्वत्यै नमः । उरसि शिवदूत्यै नमः । वामभुजे माहेश्वर्यै नमः । दक्षिणभुजे वैष्णव्यै नमः । वामकक्षे काळ्यै नमः । दक्षिणकक्षे रक्तदन्तिकायै नमः । हृदये शिवायै नमः । कण्ठे माहेन्द्र्यै नमः । मुखे कात्यायन्यै नमः । शिरसि वाराह्यै नमः । पृष्ठे शताक्ष्यै नमः । भूमौ शाकंभर्यै नमः । अन्तरिक्षे कौशिक्यै नमः । सर्वांगेषु श्रीचण्डिकायै नमः ।

विन्यसेन्मूर्ध्नि कामाक्षीं दुर्गां देवीं ललाटके ।
भ्रुवोर्मध्ये भद्रकाळीं चक्षुर्मध्ये महेश्वरीं ॥
वाराहीं नासिकायां च कौमारीमोष्ठयोर्न्यसेत् ।
दन्तेषु नारसिंहीं च जिह्वायां चण्डिकां न्यसेत् ॥
श्रोत्रद्वये न्यसेद् गौरीं कण्ठमध्ये तु वैष्णवीम् ।
हृदये च महालक्ष्मीं स्तनमध्ये तु पार्वतीम् ॥
वक्षःस्थले भगवतीं बाहुमूले तु शांभवीम् ।
बाहुमध्ये भद्रकाळीं अंगुलीषु च मालिनीम् ॥
ब्रह्माणीं नाभिमध्ये तु कटिमध्ये तु यक्षिणीम् ।
जङ्घाद्वये तथा गौरींजानुमध्ये तु शाङ्करीम् ॥
गुल्फद्वये च मातङ्गीं विजयां पादयोस्तथा ।
चामुण्डां रोमकूपेषु चर्मादिषु च भैरवीम् ॥

रुधिरादिषु चेन्द्राणीं पुष्टांगीं सर्वसन्धिषु ।
सर्वाङ्गेषु च वाग्देवीं पृष्ठे ज्येष्ठां न्यसेत्क्रमात् ॥

इति न्यासः ॥ १ ॥

अथ आवाहनम् ।

---

मन्त्राक्षरमयीं देवीं मातृकारूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥

इत्यावाहनम् ॥ २ ॥

## अथ नामानि ।

---

श्रीदेवीनाम्नामगस्त्य ऋषिः । महाविराट् छन्दः । चिन्तामणिविद्येश्वरी देवता । ऐं बीजम् । ह्रीं शक्तिः । सौः कीलकम् । महा-मायाप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ध्यानम् —

अष्टौभुजाङ्गीं महिषस्य मर्दिनीं
सशंखचक्रां शरशूलधारिणीम् ।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदा शरणमहं प्रपद्ये ॥

दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी ।
प्रेताशी डाकिनी काळी काळरात्री निशाचरी ॥
झङ्कारी चोर्ध्ववेताळी पिशाची भूतडामरी ।
ऊर्ध्वकेशी विरूपाक्षी शुष्काङ्गी नरभोजिनी ॥
राक्षसी घोररक्ताक्षी विश्वरूपी भयङ्करी ।
चामुण्डी वीरकौमारी वाराही मुण्डधारिणी ॥
भ्रामरी रुद्रवेताळी भीष्मरी त्रिपुरान्तकी ।
भैरवी ध्वंसिनी क्रोधी दुर्मुखी प्रेतवाहिनी ॥
खट्वाङ्गी दीर्घलम्बोष्ठी मालिनी मन्त्रयोगिनी ।
कौशिकी मर्दिनी यक्षी रोमजंघा प्रहारिणी ॥
कालाग्निर्ग्रामणीश्चक्री कङ्काळी भुवनेश्वरी ।
फट्कारी वीरभद्रेशी धूम्राक्षी कलहप्रिया ॥

कण्टकी नाटकी मारी यमदूती कराळिनी ।
सहस्राक्षी कामलोला काकदंष्ट्रा त्वधोमुखी ॥
धूर्जटी विकटी घोरी कपाली विषलङ्घिनी ।
चतुःषष्टिः समाख्याता योगिन्यो वरसिद्धिदाः ॥
नित्यं स्मरणमात्रेण सर्वपापक्षयो भवेत् ॥

इति नामानि ॥ ३ ॥

## ॥ अथ अर्गळम् ॥

---

अस्य श्री अर्गळस्तोत्र महामन्त्रस्य स्वर्णा-
कर्षणभैरव ऋषिः । अनुष्टुप् छन्दः । श्री-

महालक्ष्मी चण्डिका देवता । अं बीजं । गं शक्तिः । ळं कीलकं । श्रीमहालक्ष्मीचण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः । अं गं ळमित्यादि षडंगन्यासः ॥

ध्यानम्—

प्रकाशमध्यस्थितचित्स्वरूपां
वराभये सन्दधतीं त्रिणेत्रां ।
सिन्दूरवर्णाङ्कितकोमळांगीं
मायामयीं तत्वमयीं नमामि ॥

जय त्वं देवि चामुण्डे जय भूतापहारिणि ।
जय सर्वगते देवि काळरात्रि नमोऽस्तु ते ॥

या त्वं प्रीतिविधौ ख्याता सर्वदा सर्वकीर्तिदा ।
तस्या भेदा ह्यनन्ताश्च तन्माहात्म्यं शुभोदयम् ॥
या देवी स्तूयते नित्यं विबुधैर्वेदपारगैः ।
सा मे वसतु जिह्वाग्रे ब्रह्मरूपा सरस्वती ॥
जयन्ती मङ्गला काळी भद्रकाळी कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोस्तु ते ॥
मधुकैटभविद्राविं विधातृवरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
महिषासुरनिर्नाशविधात्रि वरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
वन्दितांघ्रियुगे देवि सर्वसौभाग्यदायिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

रक्तबीजवधे देवि चंडमुंडविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
चण्डिके सततं ये त्वामर्चयंतीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं च मां कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

हिमाचल सुता नाथ पूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

सुरासुरशिरोरत्न निघृष्टचरणेंबिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

इन्द्राणीपति सद्भाव पूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

देवि प्रचण्डदोर्दण्ड दैत्य दर्प विनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

देवि भक्तजनोद्दामदत्तानन्दादयेंबिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीं ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

तारिणीं दुर्गं संसारसागरस्य कुलोद्भवाम् ।
पुत्रां देहि धनं देहि सर्वकामांश्च देहि मे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥
इदं स्तोत्रं पठित्वातु महास्तोत्रं पठेन्नरः ।
सतु सप्तशती सख्यापरमाप्नोति सर्वदा ॥
अर्गळं कीलकं चादौ पठित्वा कवचं पठेत् ।
जपेत् सप्तशतीं पश्चात् क्रम एष शिवोदितम् ॥
अर्गळं दुरितं हन्ति कीलकं फलदं तथा ।
कवचं रक्षते नित्यं चण्डिकात्रितयं पठेत् ॥
अर्गळं हृदये यस्य तथाऽनर्गळवानसौ ।
भविष्यतीति निश्चित्य शिवेन रचितं पुरा ॥
कीलकं हृदये यस्य स कीलित मनोरथः ।

भविष्यति न सन्देहः नान्यथा शिवभाषितम् ॥
कवचं हृदये यस्य स वज्रकवचस्सुखी ।
भविष्यतीति निश्चित्य ब्रह्मणा निर्मितं पुरा ।
भुक्त्वातु सकलान् भोगान् अन्ते शिवपदं व्रजेत्

इत्यर्गळम् ॥ ४ ॥

## ॥ अथ कीलकम् ॥ ५ ॥

अस्य श्रीकीलकस्तोत्र महामन्त्रस्य विशुद्ध-ज्ञान ऋषिः अनुष्टुप् छन्दः श्रीचण्डिका देवता ।

क्षां बीजं , क्षीं शक्तिः , क्लूं कीलकं , श्रीचण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः । क्षामित्यादि षडंगन्यासः ॥

अथ ध्यानम् ॥

शोणप्रभं सोमकलावतंसं
पाणिस्फुरत्पञ्च शरेक्षुचापम् ।
प्राणप्रियं नौमि पिनाकपाणेः
कोणत्रयस्थं कूलदैवतं नः ॥

ऋषिरुवाच—

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥

सर्वमेतद्विजानीयात् मन्त्राणामपि कीलकम् ।
सोपि क्षेममवाप्नोति सततं जपतत्परः ॥

सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एतेन स्तुवतां देवि स्तोत्रमात्रेण सिद्ध्यति ॥

न मन्त्रोनौषधं तत्र न किंचिदपि विद्यते ।
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥

समग्राण्यपिसिद्ध्यंतिलोकेशं कामिमां हरः ।
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥

स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ।
समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम् ॥

सोपि क्षेममवाप्नोति सर्वमेव न संशयः ।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥

ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।
इत्थंरूपेण कीलेन महादेवेन कीलकम् ॥
यो निष्कीलां विधायैनां नित्यं जपति संस्फुटं ।
स सिद्धः सगणस्सोपि गन्धर्वो जायतेऽवने ॥
न चैवाप्यटतस्तस्य भयं क्वापीह जायते ।
नाऽपमृत्युवशं यातिमृतोमोक्षमवाप्नुयात् ॥
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधः ॥
सौभाग्यादि च यत्किंचिद्दृश्यते ललनाजने ।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥
शनैस्तु जप्यमानेस्मिन्स्तोत्रे सम्पत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥

ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥
इदं स्तोत्रं पठित्वातु महास्तोत्रं पठेन्नरः ।
स रहस्यर्चनोपेतः समस्तफलमश्नुते ॥

इति कीलकम् ॥ ५ ॥

## ॥ अथ हृदयम् ॥ ६ ॥

अस्य श्रीचण्डिकाहृदयस्तोत्र महामन्त्रस्य मार्कण्डेय ऋषिः अनुष्टुप् छन्दः श्रीचण्डिका देवता । ह्रां बीजम् । ह्रीं शक्तिः । ह्रूं कीलकम् ।

श्रीचण्डिका प्रसादसिद्ध्यर्थे जपे विनियोगः ।
ह्रामित्यादि षडंगन्यासः ॥

अथ ध्यानम्—

सर्वमंगळ मांगळ्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यंबके गौरि नारायणि नमोस्तुते ॥

ब्रह्मोवाच—

अथातस्सं प्रवक्ष्यामि विस्तरेण यथातथम् ।
चण्डिकाहृदयं गुह्यं शृणुष्वैकाग्र मानसः ॥

ऐं ह्रीं क्लीं, ह्रां ह्रीं ह्रूं । जय जय चामुण्डे चण्डिके, त्रिदशमणिमकुट कोटीर संघट्टित चरणारविन्दे, गायत्रि, सावित्रि, सरस्वती, महाहिकृताभरणे, भैरवरूपधारिणि, प्रकटित

दंष्ट्रोग्रवदने, घोरे घोराननेे, ज्वल ज्वल ज्वालासहस्र परिवृते , महाट्टहास बधिरीकृत दिगन्तरे , सर्वायुधपरिपूर्णे , कपालहस्ते , गजाजिनोत्तरीये , भूतवेताळबृन्द परिवृते , प्रकंपितधराधरे , मधुकैटभमहिषासुर धूम्रलोचन चण्डमुण्ड रक्तबीज शुंभ निशुंभादि दैत्य निष्कण्टके , काळरात्रि, महामाये , शिवे , नित्ये , इन्द्राग्नि यम , निऋति वरुण वायुसोमेशान प्रधान शक्तिभूते, ब्रह्मविष्णुशिवस्तुते, त्रिभुवनाधाराधरे, वामे , ज्येष्ठे , रौद्र्यम्बिके ब्राह्मी माहेश्वरी कौमारी वैष्णवी शंखिनी वाराहीन्द्राणी चामुण्डा शिवदूति महाकाळी महालक्ष्मी महासरस्वतीतिस्थिते, नादमध्यस्थिते, महोग्रविषोरग फणामणि घटित मकुटकटकादिरत्न,

महाज्वालामय पादबाहुदण्डोत्तमांगे महामहिषो-
परि गन्धर्वविद्याधराराधिते, नवरत्ननिधिकोशे,
तत्वस्वरूपे, वाक्पाणिपादपा यूपस्थात्मिके श-
ब्दस्पर्शरूपरसगन्धादि स्वरूपे त्वक् चक्षुश्रोत्र-
जिह्वाघ्राणमहाबुद्धिस्थिते ॐ ऐंकार ह्रींकार
क्लींकार हस्ते । आं क्रों आग्नेय नयन पात्रे प्रवे-
शय प्रवेशय, द्रां शोषय शोषय, द्रीं सुकुमा-
रय, सुकुमारय, श्रीं सर्वं प्रवेशय, प्रवेशय,
त्रैलौक्यवरवर्णिनि, समस्त चित्तं वशीकुरु
वशीकुरु मम शत्रून् शीघ्रं मारय मारय,
जाग्रत् स्वप्नसुषुप्त्यवस्थास्वस्मान् राजचोराग्नि
जलवात विषभूत शत्रुमृत्युज्वरादि स्फोटकादि
नानारोगेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः

परकर्म मन्त्र तन्त्र यन्त्रौषधशल्यशून्य क्षुद्रेभ्य-स्सम्यक् मां रक्ष रक्ष ॥

ओं ऐं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः, स्फ्रां स्फ्रीं स्फ्रूं स्फ्रैं स्फ्रौं स्फ्रः । मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा—इदं एकविंशति वारं जपेत्—

राजद्वारे श्मशाने वा विवादे शत्रुसङ्कटे ।
भूताग्नि चोरमध्यस्थे मयिकार्याणि साधयस्वाहा ॥
चण्डिका हृदयं गुह्यं त्रिसन्ध्यं यः पठेन्नरः ।
सर्वकामप्रदं पुंसां भुक्तिं मुक्तिं प्रयच्छति ॥

॥ इति हृदयम् ॥ ६ ॥

## ॥ अथ दळम् ॥ ७ ॥

---

ओन्नमोभगवति जय जय चामुण्डे चण्डि चण्डेश्वरि चण्डायुधे चण्डरूपधारिणि ताण्डवप्रिये कुण्डलीभूत दिङ्नागमण्डली कृत गण्डस्थले समस्तजगदण्डसंहारकारिणि परे अनन्तानन्दरूपे शिवे, नरशिरोमालालंकृतवक्षस्थले मणिमकुटचूडाबद्धार्द्ध चन्द्रखंडे महाभीषणे देवि परमेश्वरि महामाये, षोडशकलापरिवृतोल्लासिते महादेवासुर समर निहतरुधिरार्द्रीकृतालम्बित तनुकमलोद्भासिताकाशे, संपूर्णरुधिरशोभित महाकपालवक्त्रहासिनि, दृढतर निबद्धयमान रोमराजीसहित हेमकाञ्चीदामोज्वालितवसनारु-

णीभूत नूपुरप्रज्वलितमहीमण्डले, महाशंभुरूपे महाव्याघ्रचर्माम्बरधरे महासर्पयज्ञोपवीतिनि महाश्मशानभस्मोद्धूळित सर्वाङ्गगात्रे काळिकाळि महाकाळि कालाग्निरुद्रकाळि कालसङ्कर्षिणि कालनाशिनि काळरात्रिसञ्चारिणि नभोभक्षिणि नानाभूतप्रेतपिशाचगणसहस्र सञ्चारिणि नानाव्याधिप्रशमनि सर्वदुःखशमनि सर्वदारिद्र्यनाशिनि धगधगेत्यास्वादितमांसखण्डे गात्रविक्षेपकळकळायमान कङ्काळधारिणि मधुमांसरुधिरावसिक्तविलासिनि सकलसुरासुर गन्धर्वयक्ष विद्याधरकिन्नर किंपुरुषादिभि स्तूयमानचरिते सर्वमन्त्राधिकारिणि सर्वशक्तिप्रधाने सकललोकपावनि सकललोकभयप्रक्षाळिनि सकललोकैक-

जननि ब्रह्माणी माहेश्वरी कौमरी वैष्णवी शंखिनी वाराहीन्द्राणी चामुण्डा महालक्ष्मीरूपे महाविद्ये योगेश्वरी योगिनि चण्डिके महायोगिनि माये विश्वशरूपिणि सर्वाभरणभूषिते अतलवित-लसुतलरसातल तलातलमहातलपाताळादि भूर्भु-वस्सुवर्महर्जनस्तपस्सत्याख्य चतुर्दशभुवनैकनाथे महाक्रूरे प्रसन्नरूपधारिणि ओन्नमः पितामहाय ओन्नमो नारायणाय ओन्नमश्शिवायेति सकल-लोकजप्यमान ब्रह्मविष्णुमहेश्वररूपिणि दण्ड कमण्डलु कुण्डलधारिणि, सावित्रि सर्वमङ्गळप्रदे सरस्वति पद्मालये पार्वति सकलजगत्स्वरूपिणि शखचक्रगदाधारिणि परशुशूलपिनाकटंकधारिणि शरचापशूल करवाळखड्गडमरुकांकुश गदापरश

तोमरभिण्डिपालमुसृण्ठीमुद्गरमुसल परिघायुध दोर्दण्डसहस्रे चन्द्रार्कवह्निनयने सुन्दरि इन्द्राग्नि यमनिरृतिवरुणवायुसोमेशान प्रधानशक्ति हेतुभूते सप्तद्वीपसमुद्रोपरि महाव्याप्तेश्वरि महासचराचर-प्रपञ्चमालालंकृतमेदिनीनाथे महाप्रभावे महाकैला-सपर्वतोद्यानवनविहारिणि नदीतीर्थदेवतायतनालं-कृते वसिष्ठवामदेवादि महामुनिगणवन्द्यमानचर-णारविन्दे द्विचत्वारिंशद्वर्णमाहात्म्ये पर्याप्तवेदवेदा-ङ्गानेक शास्त्राद्याधारभूते शब्दब्रह्ममयि लिपिदेवि मातृका देवि चिरं मां रक्षरक्ष मम शत्रून् हुङ्कारेण नाशयनाशय भूतप्रेतपिशाचादीनुच्चाटयोच्चारटयस-मस्तग्रहान् वशीकुरु वशीकुरु मोहय मोहय स्तंभय स्तंभय मोदय मोदय उन्मादयोन्मादय विध्वंसय

विध्वंसय द्रावय द्रावय श्रावय श्रावय स्तोभय स्तो-
भय संक्राभय संक्रामय साकलारातीन् मूर्ध्निस्फोटय
स्फोटय मम शत्रून् शीघ्रं मारयमारय जाग्रत्स्वप्नसुषु-
प्त्यवस्थास्वस्मात्राजचोराग्नि जलवात विषभूत शत्रु-
मृत्युज्वरादि नानारोगेभ्यो नानाभिचारेभ्यो नाना-
पवादेभ्यः परकर्ममन्त्रतन्त्रयन्त्रौषध शल्यशून्य
क्षुद्रोभ्यस्सम्यङ्मां रक्ष रक्ष, ॐ श्रीं ह्रीं क्ष्मौं मम
शत्रु सर्वप्राणसंहारकारिणि हुं फट् स्वाहा ॥

॥ इति दळम् ॥ ७ ॥

## ॥ अथ ध्यानम् ॥ ८ ॥

मातर्मेमधुकैटभघ्नि महिष प्राणापहारोद्यमे
हेला निर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि।
निश्शेषिकृतरक्तबीज दनुजे नित्ये निशुंभापहे
शुंभध्वांसिनि संहराशुदुरितं दुर्गे नमस्तेंबिके ॥

अष्टौभुजाङ्गीं महिषस्य मर्दिनीं
सशंखचक्रां शरशूलधारिणीम् ।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदा शरणमहं प्रपद्ये ॥ २ ॥

महिषमस्तकनृत्तविनोदन-
स्फुटरणन्मणिनूपुरमेखला ।
जननरक्षणमोक्षविधायिनी
जयतु शुंभनिशुंभनिषूदिनी ॥ ३ ॥

ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ।
वाराही घनघोरघर्घरमुखी दंष्ट्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः ॥

उद्धतौ मधुकैटभौ महिषासुरश्च निहत्य तं
धूम्रलोचनचण्डमुण्ड रक्तबीजमुखांश्च तान् ।
दुष्टशुंभनिशुंभमर्दिनि नन्दितामरवन्दिते
विष्टपत्रयतुष्टिकारिणिभद्रकालि नमोस्तु ते ॥

लक्ष्मीप्रदानसमये नवविद्रुमाभां
　　विद्याप्रदानसमये शरदिन्दुशुभ्राम् ।
विद्वेषिवर्गविजयेऽपि तमालनीलां
　　देवीं त्रिलोकजननीं शरणं प्रपद्ये ॥ ६ ॥

चन्द्रहासं त्रिशूलञ्च शङ्खचक्रगदास्तथा ।
धनुर्बाणञ्च मुसलं पिङ्गळं मुष्टिमेवच ॥ ७ ॥

पाशांकुशमुसृण्ठीश्च मुद्गरं परशुं तथा ।
वज्रायुधं च कुन्तं च खट्वाङ्गं च हलायुधम् ॥

तूणीरं क्षुरिकां मुद्रां तोमरं पानपात्रकम् ।
पट्टसं दण्डनागाश्च कुन्तदन्तौ तथैवच ॥

दर्पणं रुद्रवीणां च बिभ्रद्द्वात्रिंशदोस्तलाम् ।
पद्मरागप्रभां देवीं बालार्ककिरणारुणाम् ॥

रक्तवस्त्रपरीधानां रक्तमाल्यानुलेपनाम् ।
दशपादांबुजां देवीं दशमण्डलपूरिताम् ॥
दशाननां त्रिनेत्रां च समुन्नतपयोधराम् ।
एवं ध्यायेन्महाज्वालां महिषासुरमर्दिनीम् ॥
सर्वदारिद्र्यशमनीं सर्वदुःखनिवारिणीम् ।
ब्रह्माण्डमध्यजिह्वां तां महावक्त्रकरालिनीम् ॥
दशसाहस्रदोर्दण्डां नानाशस्त्रास्त्रधारिणीम् ।
विचित्रायुधसन्नद्धां विश्वरूपां शिवात्मिकाम् ॥
दानवान्तकरीं देवीं रक्तबीजवधोद्यताम् ।
रक्तवस्त्रधरां चण्डीं भीषणामतिभैरवाम् ॥
सम्पूर्णयौवनां लक्ष्मीं कालिकां कमलाननाम् ।
मधुकैटभसंहारीं महिषासुरमर्दिनीम् ॥ १६ ॥

चण्डमुण्डशिरश्छेत्रीं सर्वदैत्यनिषूदिनीम् ।
रक्तबीजस्य संहर्त्रीमशेषासुरभक्षिणीम् ॥
निशुंभशुंभमथनी मशेषायुधभीषणाम् ।
महाब्रह्माण्डमालाङ्गीं सर्वाभरणभूषिताम् ॥
वेतालवाहनारूढां सिंहव्याघ्रादिवाहनाम् ।
नररक्तप्रियां मायां मधुमांसोपहारिणीम् ॥
य इदं शृणुयान्नित्यं त्रिसन्ध्यं यः पठेन्नरः ।
ऋणकोट्यापहरणं रोगदारिद्र्यनाशनम् ॥
सर्वसिद्धिकरं पुण्यं सर्वकामफलप्रदम् ।
भक्तानन्दकरीं देवीं परब्रह्मस्वरूपिणीम् ॥ २१ ॥
तामष्टादशपीठस्थां त्रिपुरा मधिदेवताम् ।
वन्दे विश्वेश्वरीं देवीं भुक्तिमुक्तिफलप्रदाम् ॥

इदं सप्तशतीध्यानं सर्वरक्षाकरं नृणाम् ।
रसं रसायनं सिध्येत् गुळिकाञ्जनसिद्धिदम् ॥
पादुकायुगळं सिध्येत् मन्त्रसिद्धिकरं नृणाम् ।
सौन्दर्यराजसंमानपुत्रपौत्राभिवर्द्धनम् ॥
ऐश्वर्यलाभविजयभुक्तिमुक्तिफलप्रदम् ।
सदा सन्निहितां लक्ष्मीं चण्डिकां मम देवताम् ॥
स्मरेन्नित्यं प्रयत्नेन षण्मासान्प्राप्यते फलम् ।
महाभयापहरणं शत्रुक्षयकरं तथा ॥
अचलां श्रियमाप्नोति सर्वव्याधिविनाशनम् ।
अन्ते स्वर्गश्च मोक्षश्च सत्यमेव न संशयः ॥ २७ ॥

॥ इति ध्यानम् ॥ ८ ॥

॥ अथ कवचम् ॥ ९ ॥

---

अस्य श्री देवीकवचस्तोत्र महामन्त्रस्य ब्रह्म ऋषिः अनुष्टुप् छन्दः, मध्ये विराट् छन्दः, त्रिष्टुब् जगत्यौ छन्दसी, शक्तित्रयस्वरूपिणी महादुर्गा देवता । ह्रां बीजं, ह्रीं शक्तिः, ह्रूं कीलकम् । शक्तित्रयस्वरूपिणी महादुर्गा प्रसाद सिद्ध्यर्थे जपे विनियोगः—

शंभुतेजो ज्वलज्ज्वालामालिनि पावकरोचिषे ह्रां नन्दजायै हृदयाय नमः,

शंभु + चिषे ह्रीं नन्दजायै शिरसे स्वाहा
शंभु + चिषे ह्रूं नन्दजायै शिखायै वषट्

शंभु + चिषे ह्रैं नन्दजायै कवचाय हुं
शंभु + चिषे ह्रौं नन्दजायै नेत्रत्रयाय वौषट्
शंभु + चिषे ह्रः नन्दजायै अस्त्राय फट्
ॐ भूर्भुवस्सुवरों इति दिग्बन्धः—

ध्यानम्—

सौवर्णाम्बुजमध्यगां त्रिणयनां
सौदामिनीसन्निभाम् ।
शंखं चक्रवराभयञ्च दधती-
मिन्दोः कलां बिभ्रतीम् ॥

ग्रैवेयांगदहारकुण्डलधरा-
माखण्डलाद्यैः स्तुताम्
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं
पार्श्वस्थ पञ्चाननाम् ॥

शंखं चक्रमथो धनुश्च दधतीं विभ्राभिता तर्जनीम्
वामे शक्तिमासिं शरान्कलयतीं तिर्यक्त्रिशूलं भुजैः
सन्नद्धां विविधायुधैः परिवृतां मन्त्रीं कुमारीजनैः
ध्यायेदिष्टवरप्रदां त्रिनयनां सिंहाधिरूढां भजे ॥

शंखासि चाप शरभिन्नकरां त्रिनेत्राम्
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनुतां च दुर्गाम्
दुर्वानिभां दुरितवर्गनिभां नमामि ॥ ३ ॥

मार्कण्डेय उवाच—

यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ ४ ॥

ब्रह्मोवाच—

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ ५ ॥

प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ६ ॥

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं काळरात्रीति महागौरीति चाष्टमम् ॥ ७ ॥

नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ८ ॥

इदं भक्ताय देयं स्यात् नाभक्ताय कदाचन ।
नास्तिकाय च दुष्टाय कृपणाय दुरात्मने ॥ ९ ॥

अग्निना दह्यमानाऽस्तु शत्रुमध्ये गता रणे ।
विषमे दुर्गमे चैव भयार्ताश्शरणं गताः ॥ १० ॥
न तेषां जायते किञ्चित् अशुभं रणसङ्कटे ।
नाशुभं तेषु पश्यामि शोकदुःखभयं नहि ॥ ११ ॥
यैस्तु भक्त्या स्तुता नूनं तेषामृद्धिः प्रजायते ।
नित्या भगवती भद्रा भद्रकाळी महेश्वरी ॥ १२ ॥
श्रुतिमृग्या वेदमूला चण्डी कात्यायनी परा ।
सुरापद्घ्नी विष्णुरूपा वाणी विश्वालया मही ॥ १३
स्वाहा स्वधा वषट्काररूपा प्रणवरूपिणी ।
शब्दब्रह्ममयी चेति त्रिसन्ध्यं श्रद्धयाऽन्वितैः ॥
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥

ब्राह्मी हंससमारूढा वैष्णवी गरुडासना ।
ऐन्द्री गजसमारूढा सर्वाभरणभूषिता ॥ १६ ॥
इत्येता मातरस्सर्वाः सर्वाभरणभूषिताः ।
नानाभरणशोभाढ्या नानारत्नैश्च शोभिताः ॥
नानावस्त्रपरीधाना नानागन्धानुलेपनाः ।
श्रेष्ठैश्च मौक्तिकैर्दिव्यैः दिव्यहारप्रलंबिभिः ॥ १८
इन्द्रनीलमहानीलपद्मरागैश्च शोभिताः ।
दीप्यन्ते रथमारूडा देव्यः कोपसमन्विताः ॥
शंखं चक्रं गदां शक्तिं हलं च मुसलायुधम् ।
खेटकं तोमरं चैव परशुं पाशमेव च ॥ २० ॥
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ।
नमोऽस्तु ते महामाये महाघोरपराक्रमे ॥ २१ ॥

महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि ॥
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।
दक्षिणे चैव वाराही नैर्ऋत्यां खड्गधारिणी ॥
प्रतीच्यां वारुणी रक्षेत् वायव्यां मृगवाहिनी ।
उदीच्यां रक्ष कौबेरी ईशान्यां शूलधारिणी ॥
ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेत् चामुण्डा शववाहना ॥ २६
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ।
अजिता वामपार्श्वेतु दक्षिणे चापराजिता ॥ २७ ॥
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ २८ ॥

नेत्रयोश्चित्रघण्टा च यमघण्टा च नासिके ।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्विन्ध्यवासिनी ॥
कपालौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥
अधरे चामृतकला जिह्वायां तु सरस्वती ।
दन्तान्रक्षतु कौमारी कण्ठमध्ये तु चण्डिका ॥
घण्टिकां चित्रघण्टा च महामाया च तालुके ।
कामाक्षी चुबुकं रक्षेत् वाचं मे सर्वमङ्गला ॥
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्द्धरी ।
नीलग्रीवा बहिः कण्ठे नलिकां नलकूबरी ॥
खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेदंबिका चाङ्गुलीषु च ॥ ३४ ॥

हस्ताङ्गुष्ठे महादेवी तर्जन्यां कालिका तथा ।
मध्यमायां महाकाली अनामिक्यां सुरेश्वरी ॥
कनिष्ठाया तु चामुण्डा करं चासुरनाशिनी ।
नखान् शूलेश्वरी रक्षेत् कुक्षिं रक्षेन्नलेश्वरी ॥
स्तनौ रक्षेन्महालक्ष्मीः मनश्शोकविनाशिनी ।
हृदयं ललिता देवी उदरं शूलधारिणी ॥ ३७ ॥
नाभिं च कामिनी रक्षेत् गुह्यं गुह्येश्वरी तथा ।
भूतनाथा च मेढ्रं मे गुदं महिषवाहिनी ॥ ३८ ॥
कटिं रक्षतु देवी मे नित्यं कनकमेखला ।
ऊर्ध्वं ब्रह्माणि मे पातु जानुनी जाह्नवीप्रिया ॥
जङ्घे महाबला प्रोक्ता जानुमध्ये विनायकी ।
गुल्फयोर्नारसिंही च पादपृष्ठेऽमितौजसी ॥ ४० ॥

पादांगुळीषुश्रीरक्षेत् पादौतु स्थलवासिनी ।
नखान् दंष्ट्राकराळी च केशांश्चैवोर्ध्वकेशिनी ॥
रोमकूपाणि कौबेरी त्वचं वागीश्वरी तथा ।
रक्तमज्जावसामांसा न्यस्थि मेदांसि पार्वती ॥
आन्त्राणि काळरात्रीतु पित्तं च मकुटेश्वरी ॥
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ४३ ॥
ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु ।
शुक्लं ब्रह्माणि मे रक्षेत् छायां चक्रेश्वरी तथा ॥
अहङ्कारं मनो बुद्धिं रक्ष मे धर्मचारिणि ।
यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु चक्रिणी ॥
प्राणापानौ तथा व्यानमुदानं च समानकम् ।
वज्रहस्ता च मे रक्षेत् प्राणान्मे रक्ष चण्डिके ॥

रसं गन्धं च रूपं च स्पर्शं शब्दं च योगिनी ।
सत्वं रजस्तमश्चैव रक्षेन्नारायणी तथा ।। ४७ ॥

आयुर्मे रक्ष वाराहि धर्मं रक्षतु योगिनी ।
गोत्रमिन्द्राणि मे रक्षेत् पशून्मे रक्ष चण्डिके ॥

पुत्रान्रक्षेन्महालक्ष्मीः भार्यां रक्षतु भैरवी ।
मार्गं क्षेमकरी रक्षेत् विजया सर्वतः स्थिता ॥

धनेश्वरी धनं रक्षेत् कौमारी कन्यकास्तथा ।
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥ ५० ॥

तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ।
इदं रहस्यं परमं भक्त्या तव मयोदितम् ॥

सर्वरक्षाकरं पुण्यं कवचं सर्वदा जपेत् ।
ब्रह्मणा निर्मितं देव्याः अधृत्वा कवचं नरः ॥

पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ।
कवचेनावृतो नित्यं यत्र यत्र हि गच्छति ॥

तत्र तत्रार्थलाभश्च विजयस्सार्वकालिकः ।
यं यं चिन्तयते कामं तं तमाप्नोत्ययत्नतः ॥

परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ।
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥

त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ।
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥

यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयाऽन्वितः ।
दैवी कला भवेत्तस्य त्रैलोक्ये चापराजितः ॥

जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ।
नश्यन्ति व्याधयस्सर्वे लूताविस्फोटकादयः ॥

स्थावरं जङ्गमं चापि कृत्रिमं चापि यद्विषम् ।
आभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥

भूचराः खेचराश्चैव जलजाश्चौपदेशिकाः ।
सहजाः कुलजा माला डाकिनी शाकिनी तथा ॥६०

अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ६१ ॥

ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥

मानोन्नतिर्भवेद्राज्ञः तेजोवृद्धिकरं परम् ।
यशसा वर्द्धते सोऽपि कीर्तिमण्डितभूतले ॥

तस्माज्जप्यं सदा भक्त्या कवचं कामदं मुने ।
जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ॥ ६४ ॥

निर्विघ्नेन भवेत्सिद्धिः चण्डीजपसमुद्भवा ।
यावद्भूमण्डलं तिष्ठेत् सशैलवनकाननम् ॥
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥
तत्पदं समवाप्नोति यावदाभूतसंप्लवम् ॥ ६६ ॥

॥ इति कवचम् ॥ ९ ॥

॥ नवाङ्गं समाप्तम् ॥

## ॥ अथ रात्रिसूक्तम् ॥

---

अस्य श्री रात्रिसूक्तस्य कुशिक ऋषिः रात्रिर्देवता । गायत्री च्छन्दः । श्रीजगदंबाप्रीत्यर्थे देवीमाहात्म्यपाठादौ जपे विनियोगः ॥

ॐ रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अधि श्रियोऽधित ॥ ओर्वप्रा अमर्त्यानिवतो देव्यु१द्वतः । ज्योतिषा बाधते तमः । निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते तमः । सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः । नि ग्रामासो अविक्षत नि पद्

तो नि पक्षिणः । नि श्येनासश्चिदर्थिनः । यावया वृक्यं १ वृकं यवयस्तेनमूर्म्ये । अथा नः सुतरा भव । उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव या तय । उप ते गाइवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमन्न जिग्युषे ।

अथ फलश्रुतिः—

रात्रिसूक्तं जपेद्रात्रौ त्रिवारञ्च दिने दिने ।
भूतप्रेतपिशाचादि चोरसर्पादि नाशनम् ॥ १ ॥

## ॥ अथ सप्तशती न्यासः ॥

अस्य श्री सप्तशतीस्तोत्र महामन्त्रस्य । ब्रह्मविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुप्

छन्दांसि । श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । नन्दाशाकंभरीभीमाः शक्तयः । रक्त-दन्तिका दुर्गाभ्रामर्यो बीजानि । अग्निवायुसूर्या-स्तत्वानि । ऋग्यजुःसामवेदा ध्यानानि । श्री महाकालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थे सर्वा-भीष्टसिद्ध्यर्थे च जपे विनियोगः ॥

तत्रादौ न्यासः—

ॐ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शंखिनी चापिनी बाणभुशुंडी परिघायुधा ॥
अंगुष्ठाभ्यां नमः ।

ॐ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घंटास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥
तर्जनीभ्यां नमः ।

ॐ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥

मध्यमाभ्यां नमः ।

ॐ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥

अनामिकाभ्यां नमः ।

ॐ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके।
करपल्लवसंगीनि तै रस्मान्रक्ष सर्वतः ॥

कनिष्ठिकाभ्यां नमः ।

ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तु ते ॥

करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादि न्यसेत् ॥

अथ ध्यानम्—

खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुंडीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वांगभूषाभृतम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हंतुं मधुं कैटभम् ॥
अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुंडिकां
दंडं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥
घण्टाशूलहलानि शंखमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्
गौरीदेहसमुद्भवां त्रिनयनामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनुभजे शुंभादिदैत्यार्दिनीम् ॥

। ॐ श्री गणेशाय नमः ।

श्री महादेव्यै नमः

॥ देवीमाहात्म्ये प्रथमाध्यायप्रारंभः ॥

---

ॐ सूत उवाच—

[तपस्यन्तं महात्मानं मार्कण्डेयं महामुनिम् ।
व्यासशिष्यो महातेजाः जैमिनिः पर्यपृच्छत ॥

जैमिनिः—

मार्कण्डेय महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रोतुमिच्छाम्यशेषेण देवीमाहात्म्यमुत्तमम् ॥

मार्कण्डेयः—

साधु पृष्टं महाभाग वक्ष्यामि हितकाम्यया ।
तच्छृणुष्व मया ब्रह्मन् समाधाय मनश्चिरम् ॥]

मार्कंण्डेय उवाच ॥ १ ॥

सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ २ ॥

महामायानुभावेन यथा मन्वंतराधिपः ।
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥

स्वारोचिषेंऽतरे पूर्वं चैत्रवंशसमुद्भवः ।
सुरथो नाम राजाऽभूत्समस्ते क्षितिमंडले ॥ ४ ॥

तस्य पालयतः सम्यक्प्रजाः पुत्रानिवौरसान् ।
बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तदा ॥ ६

तस्य तैरभवद्युद्धमतिप्रबलदंडिनः ।
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥

ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ।
आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥

अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ।
कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥

ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ।
एकाकी हयमारुह्य जगाम गहनं वनम् ॥

स तत्राश्रममद्राक्षीद्द्विजवर्यस्य मेधसः ।
प्रशांतश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥ १० ॥

तस्थौ कंचित्स कालं च मुनिना तेन सत्कृतः ।
इतश्चेतश्च विचरंस्तस्मिन्मुनिवराश्रमे ॥ ११ ॥

सोऽचिंतयत्तदा तत्र ममत्वाकृष्टमानसः ।
मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥

मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा ।
न जाने स प्रधानो मे शूरो हस्ती सदामदः ॥

मम वैरिवशं यातः कान्भोगानुपलप्स्यते ॥

ये ममानुगता नित्यं प्रसादधनभोजनैः ।
अनुवृत्तिं ध्रुवं तेऽद्य कुर्वंत्यन्यमहीभृताम् ॥

असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ।
संचितः सोतिदुःखेन क्षयं कोशो गमिष्यति ॥

एतच्चान्यच्च सततं चिंतयामास पार्थिवः ।
तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥

स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ।
सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ॥

इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ।
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥

वैश्य उवाच ॥ २० ॥

समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ।
पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ २१ ॥
विहीनः स्वजनैर्दारैः पुत्रैरादाय मे धनम् ।
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥
सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥
प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ।
किं नु तेषां गृहे क्षेममक्षेमं किं नु साम्प्रतम् ॥
कथं ते किं नु सद्वृत्ता दुर्वृत्ताः किं नु मे सुताः ॥

राजोवाच ॥ २८ ॥

यैर्निरस्तो भवांल्लुब्धैः पुत्रदारादिभिर्धनैः ॥
तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥

वैश्य उवाच ॥ २९ ॥

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ।
किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ ३० ॥
यैः संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ।
पतिस्वजनहार्दं च हार्दि तेष्वेव मे मनः ॥
किमेतन्नाभिजानामि जानन्नपि महामते ।
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥
तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥
करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥

मार्कण्डेय उवाच ॥ ३५ ॥

ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥
समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥
कृत्वा तु तौ यथान्यायं यथार्थं तेन संविदम् ।
उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥

राजोवाच ॥ ३९ ॥

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥ ४० ॥
दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥
ममत्वं गतराज्यस्य राज्यांगेष्वखिलेष्वपि ॥
जानतोऽपि यथाऽज्ञस्य किमेतन्मुनिसत्तम ॥
अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ।
स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥

एवमेव तथाहं च द्वावप्यत्यंतदुःखितौ ।
दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ४४ ॥
तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि ।
ममास्य च भवत्येषा विवेकांधस्य मूढता ॥ ४५ ॥

ऋषिरुवाच ॥ ४६ ॥

ज्ञानमस्ति समस्तस्य जंतोर्विषयगोचरे ।
विषयश्च महाभाग याति चैवं पृथक् पृथक् ॥ ४७
दिवांधाः प्राणिनः केचिद्रात्रावंधास्तथापरे ।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥
ज्ञानिनो मनुजाः सत्यं किं नु ते न हि केवलम् ।
यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥

ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ।
मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ॥ ५० ॥
ज्ञानेऽपि सति पश्यैतान्पतङ्गाञ्छावचंचुषु ।
कणमोक्षादृतान्मोहात्पीड्यमानानपि क्षुधा ॥
मानुषा मनुजव्याघ्र साभिलाषाः सुतान्प्रति ।
लोभात्प्रत्युपकाराय नन्वेतान्किं न पश्यसि ॥
तथापि ममतावर्ते मोहगर्ते निपातिताः ।
महामायाप्रभावेण संसारस्थितिकारिणा ॥
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ।
महामाया हरेश्चैषा तया संमोह्यते जगत् ॥
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

तया विसृज्यते विश्वं जगदेतच्चराचरम् ।
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ ५८ ॥

राजोवाच ॥ ५९ ॥

भगवन्का हि सा देवी महामायेति यां भवान्।
ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ।
यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ।
तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥

ऋषिरुवाच ॥ ६३ ॥

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥
तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥

देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥
योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते ।
आस्तीर्य शेषमभजत्कल्पांते भगवान्प्रभुः ॥
तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ।
विष्णुकर्णमलोद्भूतौ हंतुं ब्रह्माणमुद्यतौ ॥ ६८ ॥
स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः ।
दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् ॥
तुष्टाव योगनिद्रां तामेकाग्रहृदयः स्थितः ।
विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ॥ ७० ॥
विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥

ब्रह्मोवाच ॥ ७२ ॥

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता ॥

अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः ।
त्वमेव सा त्वं सावित्री त्वं देवि जननी परा ॥

त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ।
त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपांते जगतोऽस्य जगन्मये ॥

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा च भवती महादेवी महेश्वरी ॥

प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
काळरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शंखिनी चापिनी बाणभुंशुंडीपरिघायुधा ॥ ८० ॥
सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ॥ ८१ ॥
यच्च किञ्चित्कचिद्वस्तु सदसद्वाखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ।
यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥

सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ ८५ ॥

प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥ ८६ ॥
बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥

ऋषिरुवाच ॥ ८८ ॥

एवं स्तुता तदा देवी तामसी तत्र वेधसा ।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥

नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥ ९०

उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ।
एकार्णवेऽहिशयनात्ततः स ददृशे च तौ ॥

मधुकैटभौ दुरात्मानावतिवीर्यपराक्रमौ ।
क्रोधरक्तेक्षणावत्तुं ब्रह्माणं जनितोद्यमौ ॥ ९२ ॥

समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः ।
पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः ॥

तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥

श्रीभगवानुवाच ॥ ९६ ॥

भवेतामद्य मे तुष्टौ मम वध्यावुभावपि ।
किमन्येन वरेणात्र एतावद्धि वृतं मया ॥

ऋषिरुवाच ॥ ९९ ॥

वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् ।
विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः १००
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ।। १ ॥

ऋषिरुवाच ॥ २ ॥

तथेत्युक्त्वा भगवता शंखचक्रगदाभृता ।
कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥ ३

एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् ।
प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवधो नाम प्रथमोऽध्यायः १
उवाचमन्त्राः ॥ १४ ॥ अर्धमन्त्राः ॥ २४ ॥
श्लोकमन्त्राः ॥ ६६ ॥ एवं मन्त्राः ॥ १०४ ॥

॥ अथ द्वितीयोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ।
महिषेऽसुराणमधिपे देवानां च पुरंदरे ॥ २ ॥
तत्रासुरैर्महावीर्यैर्देवसैन्यं पराजितम् ।
जित्वा च सकलान्देवानिंद्रोऽभून्महिषासुरः ॥
ततः पराजिता देवाः पद्मयोनिं प्रजापतिम् ।
पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ४ ॥
यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम् ।
त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥ ५ ॥

सूर्येन्द्राग्न्यनिलेंदूनां यमस्य वरुणस्य च ।
अन्येषां चाधिकारान्सः स्वयमेवाधितिष्ठति ॥

स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि ।
विचरंति यथा मर्त्या महिषेण दुरात्मना ॥ ७ ॥

एतद्वः कथितं सर्वममरारिविचेष्टितम् ।
शरणं च प्रपन्नाः स्मो वधस्तस्य विचिंत्यताम् ॥

इत्थं निशम्य देवानां वचांसि मधुसूदनः ।
चकार कोपं शंभुश्च भ्रुकुटीकुटिलाननौ ॥

ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥ १० ॥

अन्येषां चैव देवानां शक्रादीनां शरीरतः ।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥ ११ ॥

अतीव तेजसः कूटं ज्वलंतमिव पर्वतम् ।
ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरम् ॥
अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् ।
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥
यदभूच्छांभवं तेजस्तेनाजायत तन्मुखम् ।
याम्येन चाभवन्केशा बाहवो विष्णुतेजसा ॥
सौम्येन स्तनयोर्युग्मं मध्यमैन्द्रेण चाभवत् ।
वारुणेन च जंघोरू नितम्बस्तेजसा भुवः ॥
ब्रह्मणस्तेजसा पादौ तदंगुल्योऽर्कतेजसा ।
वसूनां च करांगुल्यः कौबेरेण च नासिका ॥
तस्यास्तु दंताः संभूताः प्राजापत्येन तेजसा ।
नयनत्रितयं जज्ञे तथा पावकतेजसा ॥

भ्रुवौ च संध्ययोस्तेजः श्रवणावनिलस्य च ।
अन्येषां चैव देवानां संभवस्तेजसां शिवा ॥

ततः समस्तदेवानां तेजोराशिसमुद्भवाम् ।
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥

ततो देवा ददुस्तस्यै स्वानि स्वान्यायुधानि च ।
शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक् ॥

चक्रं च दत्तवान्कृष्णः समुत्पाट्य स्वचक्रतः ।
शंखं च वरुणः शक्तिं ददौ तस्यै हुताशनः ॥

मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी ।
वज्रमिंद्रः समुत्पाट्य कुलिशादमराधिपः ॥

ददौ तस्यै सहस्राक्षो घंटामैरावताद्गजात् ।
कालदण्डाद्यमो दण्डं पाशं चाम्बुपतिर्ददौ ॥

प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलुम् ।
समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ॥ २४ ॥
कालश्च दत्तवान्खड्गं तस्यै चर्म च निर्मलम् ।
क्षीरोदश्चामलं हारमजरे च तथांबरे ॥ २५ ॥
चूडामणिं तथा दिव्यं कुण्डले कटकानि च ।
अर्धचन्द्रं तथा शुभ्रं केयूरान्सर्वबाहुषु ॥
नूपुरौ विमलौ तद्वद् ग्रैवेयकमनुत्तमम् ।
अंगुलीयकरत्नानि समस्तास्वंगुलीषु च ॥
विश्वकर्मा ददौ तस्यै परशुं चातिनिर्मलम् ।
अस्त्राण्यनेकरूपाणि तथाभेद्यं च दंशनम् ॥
अम्लानपङ्कजां मालां शिरस्युरसि चापराम् ।
अददज्जलधिस्तस्यै पङ्कजं चातिशोभनम् ॥

हिमवान्वाहनं सिंहं रत्नानि विविधानि च ।
ददावशून्यं सुरया पानपात्रं धनाधिपः ॥ ३० ॥
शेषश्च सर्वनागेशो महामणिविभूषितम् ।
नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमाम् ॥
अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ।
संमानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः ॥
तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ।
अमायतातिमहता प्रतिशब्दो महानभूत् ॥
चुक्षुभुः सकला लोकाः समुद्राश्च चकंपिरे ।
चचाल वसुधा चेलुः सकलाश्च महीधराः ॥
जयेति देवाश्च मुदा तामूचुः सिंहवाहिनीम् ।
तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्तयः ॥ ३५ ॥

दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ।
सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ॥
आः किमेतदिति क्रोधादाभाष्य महिषासुरः ।
अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः ॥ ३७ ॥
स ददर्श ततो देवीं व्याप्तलोकत्रयां त्विषा ।
पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ॥
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम् ।
दिशो भुजसहस्रेण समंताद्व्याप्य संस्थिताम् ॥
ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ।
शस्त्रास्त्रैर्बहुधा मुक्तैरादीपितदिगन्तरम् ॥ ४० ॥
महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ।
युयुधे चामरश्चान्यैश्चतुरंगबलान्वितः ॥ ४१ ॥

रथानामयुतैः षड्भिरुदग्राख्यो महासुरः ॥
अयुध्यतायुतानां च सहस्रेण महाहनुः ॥
पञ्चाशद्भिश्च नियुतैरसिलोमा महासुरः ।
अयुतानां शतैः षड्भिर्बाष्कलो युयुधे रणे ॥
गजवाजिसहस्रौघैरनेकैः परिवारितः ।
वृतो रथानां कोट्या च युद्धे तस्मिन्नयुध्यत ॥
बिडालाख्योऽयुतानां च पंचाशद्भिरथायुतैः ।
युयुधे संयुगे तत्र रथानां परिवारितः ॥
अन्ये च तत्रायुतशो रथनागहयैर्वृताः ।
युयुधुः संयुगे देव्या सह तत्र महासुराः ॥
कोटिकोटिसहस्रैस्तु रथानां दन्तिनां तथा ।
हयानां च वृतो युद्धे तत्राभून्महिषासुरः ॥

तोमरैर्भिंदिपालैश्च शक्तिभिर्मुसलैस्तथा ।
युयुधुः संयुगे देव्या खड्गैः परशुपट्टिशैः ॥
केचिच्च चिक्षिपुः शक्तीः केचित्पाशांस्तथापरे ।
देवीं खड्गप्रहारैस्तु ते तां हंतुं प्रचक्रमुः ॥
सापि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ।
लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ॥ ५० ॥
अनायस्तानना देवी स्तूयमाना सुरर्षिभिः ।
मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी ॥
सोऽपि क्रुद्धो धुतसटो देव्या वाहनकेसरी ।
चचारासुरसैन्येषु वनेष्विव हुताशनः ॥
निःश्वासान्मुमुचे यांश्च युध्यमाना रणेऽम्बिका ।
त एव सद्यः संभूता गणाः शतसहस्रशः ॥

युयुधुस्ते परशुभिर्भिंदिपालासिपट्टसैः ।
नाशयंतोऽसुरगणान्देवीशक्त्युपबृंहिताः ॥

अवादयन्त पटहान् गणाः शंखांस्तथापरे ।
मृदङ्गांश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे ॥

ततो देवी त्रिशूलेन गदया शक्तिऋष्टिभिः ।
खड्गादिभिश्च शतशो निजघान महासुरान् ॥

पातयामास चैवान्यान्घण्टास्वनविमोहितान् ।
असुरान्भुवि पाशेन बध्वा चान्यानकर्षयत् ॥

केचिद् द्विधा कृतास्तीक्ष्णैः खड्गपातैस्तथापरे ।
विपोथिता निपातेन गदया भुवि शेरते ॥

वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः ।
केचिन्निपतिता भूमौ भिन्नाः शूलेन वक्षसि ॥

निरन्तराः शरौघेण कृताः केचिद्रणाजिरे ।
सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ॥

केषांचिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथा परे ।
शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः ॥

विच्छिन्नजंघास्त्वपरे पेतुरुर्व्यां महासुराः ।
एकबाह्वक्षिचरणाः केचिद्देव्या द्विधाकृताः ॥

छिन्नेऽपि चान्ये शिरसि पतिताः पुनरुत्थिताः ।
[ कबन्धा युयुधुर्देव्या गृहीतपरमायुधाः । ]
ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः ॥

कबंधाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ।
तिष्ठ तिष्ठेति भाषंतो देवीमन्ये महासुराः ॥

पातितै रथनागाश्वैरसुरैश्च वसुन्धरा ।
अगम्या साऽभवत्तत्र यत्राभूत्स महारणः ॥
शोणितौघा महानद्यः सद्यस्तत्र प्रसुस्रुवुः ।
मध्ये चासुरसैन्यस्य वारणासुरवाजिनाम् ॥
क्षणेन तन्महासैन्यमसुराणां तथाम्बिका ।
निन्ये क्षयं यथा वह्निस्तृणदारुमहाचयम् ॥
स च सिंहो महानादमुत्सृजन्धुतकेसरः ।
शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥
देव्या गणैश्च तैस्तत्र कृतं युद्धं तथासुरैः ।
यथैषां तुतुषुर्देवाः पुष्पवृष्टिमुचो दिवि ॥

इति श्री मा० सा० म० देवीमाहात्म्ये महिषासुर-
सैन्यवधो नाम द्वितीयोऽध्यायः ॥ २ ॥

उवाचमन्त्रः ॥ १ ॥ श्लोकमन्त्राः ॥ ६८ ॥
एवं ॥ ६९ ॥ एवमादितः ॥ १७३ ॥

॥ अथ तृतीयोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

निहन्यमानं तत्सैन्यमवलोक्य महासुरः ॥
सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथांबिकाम् ।
स देवीं शरवर्षेण ववर्ष समरेऽसुरः ।
यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः ॥
तस्य छित्त्वा ततो देवी लीलयैव शरोत्करान् ।
जघान तुरगान्बाणैर्यन्तारं चैव वाजिनाम् ॥
चिच्छेद च धनुः सद्यो ध्वजं चातिसमुच्छ्रितम् ।
विव्याध चैव गात्रेषु च्छिन्नधन्वानमाशुगैः ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥

सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्धनि ।
आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥

तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन ।
ततो जग्राह शूलं स कोपादरुणलोचनः ॥

चिक्षेप च ततस्तत्तु भद्रकाल्यां महासुरः ।
जाज्वल्यमानं तेजोभी रविबिंबमिवाम्बरात् ॥

दृष्ट्वा तदापतच्छूलं देवी शूलममुञ्चत ।
तेन तच्छतधा नीतं शूलं स च महासुरः ॥

हते तस्मिन्महावीर्ये महिषस्य चमूपतौ ।
आजगाम गजारूढश्चामरस्त्रिदशार्दनः ॥ ११ ॥

सोऽपि शक्तिं मुमोचाथ देव्यास्तामम्बिका द्रुतम् ।
हुङ्काराभिहतां भूमौ पातयामास निष्प्रभाम् ॥
भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ।
चिक्षेप चामरः शूलं बाणैस्तदपि साच्छिनत् ॥
ततः सिंहः समुत्पत्य गजकुंभान्तरे स्थितः ।
बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥ १४ ॥
युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ।
युयुधातेऽतिसंरब्धौ प्रहारैरतिदारुणैः ॥ १५ ॥
ततो वेगात् खमुत्पत्य निपत्य च मृगारिणा ।
करप्रहारेण शिरश्चामरस्य पृथक्कृतम् ॥ १६ ॥
उदग्रश्च रणे देव्या शिलावृक्षादिभिर्हतः ।
दन्तमुष्टितलैश्चैव करालश्च निपातितः ॥

देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतम् ।
बाष्कलं भिंदिपालेन बाणैस्ताम्रं तथांधकम् ॥

उग्रास्यमुग्रवीर्यं च तथैव च महाहनुम् ।
त्रिनेत्रं च त्रिशूलेन जघान परमेश्वरी ॥

विडालस्यासिना कायात्पातयामास वै शिरः ।
दुर्धरं दुर्मुखं चोभौ शरैर्निन्ये यमक्षयम् ॥ २० ॥

एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ।
माहिषेण स्वरूपेण त्रासयामास तान् गणान् ॥

कांश्चित्तुण्डप्रहारेण खुरक्षेपैस्तथापरान् ।
लांगूलताडितांश्चान्यान्शृंगाभ्यां च विदारितान् ।

वेगेन कांश्चिदपरान्नादेन भ्रमणेन च ।
निःश्वासपवनेनान्यान्पातयामास भूतले ॥

निपात्य प्रमथानीकमभ्यधावत सोऽसुरः ।
सिंहं हंतुं महादेव्याः कोपं चक्रे ततोऽम्बिका ॥

सोऽपि कोपान्महावीर्यः खुरक्षुण्णमहीतलः ।
शृंगाभ्यां पर्वतानुच्चांश्चिक्षेप च ननाद च ॥

वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्यत ।
लांगूलेनाहतश्चाब्धिः प्लावयामास सर्वतः ॥

धुतशृंगविभिन्नाश्च खंडं खंडं ययुर्घनाः ।
श्वासानिलास्ताः शतशो निपेतुर्नभसोऽचलाः ॥

इति क्रोधसमाध्मातमापतंतं महासुरम् ।
दृष्ट्वा सा चण्डिका कोपं तद्वधाय तदाकरोत् ॥

सा क्षिप्त्वा तस्य वै पाशं तं बबन्ध महासुरम् ।
तत्याज माहिषं रूपं सोऽपि बद्धो महामृधे ॥

ततः सिंहोऽभवत्सद्यो यावत्तस्याम्बिका शिरः ।
छिनत्ति तावत्पुरुषः खड्गपाणिरदृश्यत ॥ ३० ॥

तत एवाशु पुरुषं देवी चिच्छेद सायकैः ।
तं खड्गचर्मणा सार्धं ततः सोऽभून्महागजः ॥

करेण च महासिंहं तं चकर्ष जगर्ज च ।
कर्षतस्तु करं देवी खड्गेन निरकृन्तत ॥

ततो महासुरो भूयो माहिषं वपुरास्थितः ।
तथैव क्षोभयामास त्रैलोक्यं सचराचरम् ॥

ततः क्रुद्धा जगन्माता चण्डिका पानमुत्तमम् ।
पपौ पुनः पुनश्चैव जहासारुणलोचना ॥

ननर्द चासुरः सोऽपि बलवीर्यमदोद्धतः ।
विषाणाभ्यां च चिक्षेप चण्डिकां प्रति भूधरान् ॥

सा च तान्प्रहितांस्तेन चूर्णयन्ती शरोत्करैः ।
उवाच तं मदोद्धूतमुखरागाकुलाक्षरम् ॥ ३६ ॥

देव्युवाच ॥ ३७ ॥

गर्ज गर्ज क्षणं मूढ मधु यावत्पिबाम्यहम् ।
मया त्वयि हतेऽत्रैव गर्जिष्यंत्याशु देवताः ॥

ऋषिरुवाच ॥ ३९ ॥

एवमुक्त्वा समुत्पत्य सारूढा तं महासुरम् ।
पादेनाक्रम्य कंठे च शूलेनैनमताडयत् ॥ ४० ॥

ततः सोऽपि पदाक्रान्तस्तया निजमुखात्तदा ॥
अर्धनिष्क्रान्त एवासीद्देव्या वीर्येण संवृतः ॥

अर्धनिष्क्रान्त एवासौ युध्यमानो महासुरः ।
तया महासिना देव्या शिरश्छित्वा निपातितः ॥

ततो हाहाकृतं सर्वं दैत्यसैन्यं ननाश तत् ।
प्रहर्षं च परं जग्मुः सकला देवतागणाः ॥

तुष्टुवुस्तां सुरा देवीं सह दिव्यैर्महर्षिभिः ।
जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४४ ॥

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये महिषासुरवधो नाम तृतीयोऽध्यायः उवाच ॥ ३ ॥ श्लोकाः ॥ ४१ ॥ एवं ॥ ४४ ॥ एवमादितः ॥ २१७ ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

[ततः सुरगणास्सर्वे देव्या इन्द्रपुरोगमाः ।
स्तुतिमारेभिरे कर्तुं निहते महिषासुरे ॥]

शक्रादयः सुरगणा निहतेऽतिवीर्ये
तस्मिन्दुरात्मनि सुरारिबले च देव्या ।
तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा
वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥

देव्या यया ततमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्याम्
भक्त्या नताः स्म विदधातु शुभानि सा नः ॥

यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥ ४ ॥

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम् ॥

किं वर्णयाम तव रूपमचिन्त्यमेत-
त्किं चातिवीर्यमसुरक्षयकारि भूरि ।
किं चाहवेषु चरितानि तवातियानि
सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ६ ॥

हेतुः समस्तजगतां त्रिगुणापि दोषै-
र्न ज्ञायसे हरिहरादिभिरप्यपारा ।
सर्वाश्रयाखिलमिदं जगदंशभूत-
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥

यस्याः समस्तसुरता समुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवि ।
स्वाहासि वै पितृगणस्य च तृप्तिहेतु-
रुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ८ ॥

या मुक्तिहेतुरविचिन्त्यमहाव्रता त्व-
मभ्यस्यसे सुनियतेंद्रियतत्वसारैः ।
मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै-
र्विद्यासि सा भगवती परमा हि देवी ॥

शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवतां च साम्नाम् ।
देवि त्रयी भगवती भव भावनाय
वार्तासि सर्वजगतां परमार्तिहन्त्री ॥ १० ॥

मेधासि देवि विदिताखिलशास्त्रसारा
दुर्गासि दुर्गभवसागरनौरसङ्गा ।
श्रीः कैटभारिहृदयैककृताधिवासा
गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ ११ ॥

ईषत्सहासममलं परिपूर्णचन्द्र-
बिम्बानुकारि कनकोत्तमकान्ति कान्तम् ।
अत्यद्भुतं प्रहृतमात्तरुषा तथापि
वक्त्रं विलोक्य सहसा महिषासुरेण ॥ १२ ॥

दृष्ट्वा तु देवि कुपितं भ्रुकुटीकराल-
मुद्यच्छशांकसदृशच्छवि यन्न सद्यः ।
प्राणान्मुमोच महिषस्तदतीव चित्रं
कैर्जीव्यते हि कुपितांतकदर्शनेन ॥ १३ ॥

देवि प्रसीद परमा भवती भवाय
सद्यो विनाशयसि कोपवती कुलानि ।
विज्ञातमेतदधुनैव यदस्तमेत-
न्नीतं बलं सुविपुलं महिषासुरस्य ॥ १४ ॥

ते संमता जनपदेषु धनानि तेषां
तेषां यशांसि न सीदति बंधुवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १५ ॥

धर्म्याणि देवि सकलानि सदैव कर्मा-
ण्यत्यादृतः प्रतिदिनं सुकृती करोति ।
स्वर्गं प्रयाति च ततो भवतीप्रसादा-
ल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १६ ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १७ ॥

एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्वन्तु नाम नरकाय चिराय पापम् ।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान्विनिहंसि देवि ॥ १८ ॥

दृष्ट्वैव किं न भवती प्रकरोति भस्म
सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम् ।
लोकान्प्रयान्तु रिपवोऽपि हि शस्त्रपूता
इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ १९ ॥

खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः
शूलाग्रकान्तिनिवहेन दृशोऽसुराणाम् ।
यन्नागता विलयमंशुमदिंदुखंड-
योग्याननं तव विलोकयतां तदेतत् ॥ २० ॥

दुर्वृत्तवृत्तशमनं तव देवि शीलं
रूपं तथैतदविचिन्त्यमतुल्यमन्यैः ।
वीर्यं च हंतृ हृतदेवपराक्रमाणाम्
वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥ २१ ॥

केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपं च शत्रुभयकार्यतिहारि कुत्र ।
चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ २२ ॥

त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्धनि तेऽपि हत्वा ।
नीता दिवं रिपुगणा भयमप्यपास्त-
मस्माकमुन्मदसुरारिभवं नमस्ते ॥ २३ ॥

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥

[ चक्रेण पाहि नो देवि शंखेन च पुनीहि नः ।
गदया ताडयास्माकमरीन्मर्दय मारय ॥ ]

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २५ ॥

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते ।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसंगीनि तैरस्मान् रक्ष सर्वतः ॥

ऋषिरुवाच ॥ २८ ॥

एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नंदनोद्भवैः ।
अर्चिता जगतां धात्री तथा गंधानुलेपनैः ॥

भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता ।
प्राह प्रसादसुमुखी समस्तान्प्रणतान्सुरान् ॥

देव्युवाच ॥ ३१ ॥

[तुष्टास्मि स्तोत्रमुख्येण तथैवाराधनेन च ।
सुरामांसोपहारेण भक्त्या चानन्यपूर्वया ॥
स्तोत्रेणानेन येऽर्चन्ति भयकाल उपस्थिते ।
तेषां भयं विनेतास्मि कामानिष्टान् ददामि च ॥]
व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवांछितम् ॥
[ददाम्यहमतिप्रीत्या स्तवैरेभिः सुपूजिता ।
भवतामुपकाराय किमन्यदवशिष्यते ॥
कर्तव्यमपरं यच्च दुष्करं तन्निवेद्यताम् ।
करोमि भवतां कार्यं संप्रीत्या दुष्करं महत् ।
श्रुत्वैव च प्रसन्नास्ते कृताञ्जलिपुटा जगुः ॥]

देवा ऊचुः ॥ ३२ ॥

भगवत्या कृतं सर्वं न किंचिदवशिष्यते ।
यदयं निहतः शत्रुरस्माकं महिषासुरः ॥
यदि चापि वरो देयस्त्वयास्माकं महेश्वरि ।
संस्मृता संस्मृता त्वं नो हिंसेथाः परमापदः ॥
यश्च मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ।
तस्य वित्तर्द्धिविभवपुत्रदारादिसम्पदाम् ॥ ३६ ॥
वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥
[पूर्वमेव वरं प्रादा ह्यस्माकं वचनात्पुनः ।
देवानां मनुजानाञ्च हिताय महिषार्दिनि ॥]
ऋषिरुवाच ॥ ३८ ॥
इति प्रसादिता देवैर्जगतोऽर्थे तथात्मनः ।
तथेत्युक्त्वा भद्रकाळी बभूवान्तर्हिता नृप ॥

इत्येतत्कथितं भूप संभूता सा यथा पुरा ।
देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥ ४० ॥
पुनश्च गौरीदेहात्सा समुद्भूता यथाभवत् ।
वधाय दुष्टदैत्यानां तथा शुंभनिशुंभयोः ॥
रक्षणाय च लोकानां देवानामुपकारिणी ।
तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये शक्रादिस्तुतिर्नाम
चतुर्थोऽध्यायः ॥ ४ ॥

उवाचमन्त्रः ॥ ५ ॥ अर्धमन्त्रौ ॥ २ ॥ श्लोकमन्त्राः ॥३५॥ एवं ॥४२॥ एवमादितः ॥२५९॥

## ॥ अथ पञ्चमोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

[पुरा शुंभनिशुंभाख्यावसुरौ घोरदर्शनौ ।
अप्राप्तयौवनावेव चेरतुस्तप उत्तमं ॥
वर्षाणामयुतं राजन् दिव्यं विस्मापनप्रदं ।
निराहारौ महाराज पुष्करे लोकपावने ॥
ततः प्रसन्नो भगवान् ब्रह्मालोकपितामहः ।
मनोऽभिलषितान् प्रादात्तयोः कामाननुत्तमान् ॥
अवध्यत्वं सुरैस्सिद्धैरन्यैश्च जगतीतले ।
इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति ॥]

ततः शुंभनिशुभाभ्यामसुराभ्यां शचीपतेः ।
त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात् ॥

तावेव सूर्यतां तद्वदधिकारं तथैन्दवम् ।
कौबेरमथ याम्यं च चक्राते वरुणस्य च ॥

तावेव पवनार्द्धिं च चक्रतुर्वह्निकर्म च ।
ततो देवा विनिर्धूता भ्रष्टराज्याः पराजिताः ॥

हृताधिकारास्त्रिदशास्ताभ्यां सर्वे निराकृताः ।
महासुराभ्यां तां देवीं संस्मरंत्यपराजिताम् ॥

तयास्माकं वरो दत्तो यथापत्सु स्मृताखिलाः ।
भवतां नाशयिष्यामि तत्क्षणात्परमापदः ॥

इति कृत्वा मतिं देवा हिमवन्तं नगेश्वरम् ।
जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः ॥

देवा ऊचुः ॥ ८ ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥

रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ।
ज्योत्स्नायै चेंदुरूपिण्यै सुखायै सततं नमः ॥

कल्याण्यै प्रणतांवृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः ।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥

दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥

अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥

या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु च्छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु क्षांतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु शांन्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु कांतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
[या देवी सर्वभूतेषु धृतिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥]
या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

[ या देवी सर्वभूतेषु नीतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ]

या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।

[ या देवी सर्वभूतेषु पुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ]

या देवी सर्वभूतेषु मातृरूपेण संस्थिता । ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इंद्रियाणामधिष्ठात्री भूतानां चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

स्तुता सुरैः पूर्वमभीष्टसंश्रया-
त्तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥ ८१ ॥

या सांप्रतं चोद्धतदैत्यतापितै-
रस्माभिरीशा च सुरैर्नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति नः
सर्वापदो भक्तिविनम्रमूर्तिभिः ॥ ८२ ॥

ऋषिरुवाच ॥ ८३ ॥

एवं स्तवाभियुक्तानां देवानां तत्र पार्वती ।
स्नातुमभ्याययौ तोये जाह्नव्या नृपनन्दन ॥

साब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिः स्तूयतेऽत्र का ।
शरीरकोशतश्चास्याः समुद्भूताब्रवीच्छिवा ॥

स्तोत्रं ममैतत्क्रियते शुंभदैत्यनिराकृतैः ।
देवैः समस्तैः समरे निशुंभेन पराजितैः ॥

[ इत्याकर्ण्य गिरन्देवी तामाह सुभगा पुनः ।
हिमवद्दाक्षिणं शृङ्गं गत्वा त्वं भरतान्तिकं ॥

देवकार्यं विधायाशु पश्चादेहि ममान्तिकं ।
आज्ञप्ता च तया देव्या भद्रकाळी तदाभवत् ॥

शरीरकोशाद्यत्तस्याः पार्वत्या निःसृतांबिका ।
कौशिकीति समस्तेषु ततो लोकेषु गीयते ॥
तस्यां विनिर्गतायां तु कृष्णाभूत्सापि पार्वती ।
कालिकेति समाख्याता हिमाचलकृताश्रया ॥
[ सम्मार्जयन्ती तान् केशान् ईषत्प्रहसिनानना ।
हन्तास्मि तौ महावीर्यावित्युक्त्वा त्रिदशांस्तदा ।
प्रतस्थे हिमवच्छृङ्गं सिद्धचारणसेवितम् ॥
यक्षगन्धर्वचरितमप्सरोगणसेवितम् ।
ततो देवा महाभागा जग्मुस्ते हृष्टमानसाः ।
तस्मिन् गिरिवरे राजन् डोळामारुह्य काञ्चनीम् ।
गायन्तीव हसन्तीव बिभ्राणा रूपमुत्तमम् ।
उवास सा चिरं कालं देवानां हितकाम्यया ॥ ]

ततोऽम्बिकां परं रूपं बिभ्राणां सुमनोहरम् ॥
ददर्श चण्डो मुण्डश्च भृत्यौ शुंभनिशुंभयोः ।
[ यदृच्छया पर्यटन्तौ मेदिनीं कामरूपिणौ ॥
तौ दृष्ट्वा चारुसर्वाङ्गीं विस्मयाविष्टमानसौ ।
जग्मतुः स्वपुरं राजन् शुंभदर्शनलालसौ ॥
ताभ्यां शुंभाय चाख्याता सातीव सुमनोहरा ।
काप्यास्ते स्त्री महाराज! भासयन्ती हिमाचलम् ॥
नैव तादृक् क्वचिद्रूपं दृष्टं केनचिदुत्तमम् ।
ज्ञायतां काप्यसौ देवी गृह्यतां चासुरेश्वर ॥
[ यादृष्टपूर्वा देवेषु गन्धर्वेपूरगेषु च । ]
स्त्रीरत्नमतिचार्वङ्गी द्योतयन्ती दिशास्त्विषा ।
सा तु तिष्ठति दैत्येन्द्र तां भवान्द्रष्टुमर्हति ॥

[ नैव देवी न गन्धर्वी नासुरी न च पन्नगी ।
दृष्टपूर्वा कचिन्नारी श्रुतपूर्वापि वा प्रभो ॥
त्रैलोक्ये यास्सुचार्वंग्यो भावहावसमन्विताः ।
आदाय तिलशस्तासां निर्मिता स्त्री तिलोत्तमा ॥
तिलोत्तमासहस्राणां तिलांशेनैव निर्मिता ।
भ्राजते पर्वतस्याग्रे डोळामारुह्य काञ्चनीम् ॥
ऊनषोडशवर्षेव सम्पूर्णनवयौवना ।
चतुर्दशानां लोकानां देवतेव विराजते ॥
नैव तस्याः पिता तत्र न भ्राता न च बान्धवाः ।
न चान्ये रक्षितारश्च सैका तिष्ठति निर्जने ॥
तां रूपसम्पदोपेतां यौवनोत्तमशालिनीम् ।
तवैव योग्यां राजेन्द्र तां भवान्द्रष्टुमर्हति ॥ ]

यानि रत्नानि मणयो गजाश्वादीनि वै प्रभो ।
त्रैलोक्ये तु समस्तानि सांप्रतं भान्ति ते गृहे ॥
ऐरावतः समानीतो गजरत्नं पुरन्दरात् ।
पारिजाततरुश्चायं तथैवोच्चैःश्रवा हयः ॥ ९४ ॥
विमानं हंससंयुक्तमेतत्तिष्ठति तेंगणे ।
रत्नभूतमिहानीतं यदासीद्वेधसोऽद्भुतम् ॥ ९५ ॥
निधिरेष महापद्मः समानीतो धनेश्वरात् ।
किञ्जल्किनीं ददौ चाब्धिर्मालामम्लानपङ्कजाम् ॥
छत्रं ते वारुणं गेहे काञ्चनस्रावि तिष्ठति ।
तथायं स्यन्दनवरो यः पुरासीत्प्रजापतेः ॥
मृत्योरुत्क्रान्तिदा नाम शक्तिरीश त्वया हृता ।
पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे ॥

निशुंभस्याब्धिजाताश्च समस्ता रत्नजातयः ।
वह्निरण्यददात्तुभ्यमग्निशौचे च वाससी ॥
एवं दैत्येन्द्र रत्नानि समस्तान्याहृतानि ते ।
स्त्रीरत्नमेषा कल्याणी स्वयमेवाभ्युपागता ॥
त्रैलोक्यराज्यादधिका त्वया कस्मान्न गृह्यते ॥

ऋषिरुवाच ॥ १ ॥

निशम्येति वचः शुंभः स तदा चण्डमुण्डयोः ।
[ मन्मथाविष्टहृदयः क्षणेन समपद्यत ]
प्रेषयामास सुग्रीवं दूतं देव्या महासुरः ॥ २ ॥
इति चेति च वक्तव्या सा गत्वा वचनान्मम ।
यथा चाभ्येति संप्रीत्या तथा कार्यं त्वया लघु ॥
स तत्र गत्वा यत्रास्ते शैलोद्देशेऽतिशोभने ।
स देवीं तां ततः प्राह श्लक्ष्णं मधुरया गिरा ॥

[ निशम्य दैत्यराजस्य सुग्रीवो नयकोविदः ।
तथेतिचोक्त्वा प्रययौ स्वल्पसैन्यसमन्वितः ॥ ]

दूत उवाच ॥ ५ ॥

देवि दैत्येश्वरः शुंभस्त्रैलोक्यपरमेश्वरः ।
दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥ ६ ॥
अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु ।
निर्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ॥
मम त्रैलोक्यमखिलं मम देवा वशानुगाः ।
यज्ञभागानहं सर्वानुपाश्नामि पृथक् पृथक् ॥
त्रैलोक्यवररत्नानि मम वश्यान्यशेषतः ।
तथैव गजरत्नं च हृतं देवेन्द्रवाहनम् ॥ ९ ॥
क्षीरोदमथनोद्भूतमश्वरत्नं ममामरैः ।
उच्चैःश्रवससंज्ञं तत्प्रणिपत्य समर्पितम् ॥

यानि चान्यानि देवेषु गन्धर्वेषूरगेषु च ।
रत्नभूतानि सर्वाणि तानि मय्येव शोभने ॥

स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयम् ।
सा त्वमस्मानुपागच्छ यतो रत्नभुजो वयम् ॥

मां वा ममानुजं वापि निशुंभमुरुविक्रमम् ।
भज त्वं चञ्चलापाङ्गि रत्नभूतासि वै यतः ॥

परमैश्वर्यमतुलं प्राप्स्यसे मत्परिग्रहात् ।
एतद्बुद्ध्या समालोच्य मत्परिग्रहतां व्रज ॥

ऋषिरुवाच ॥ १५ ॥

इत्युक्ता सा तदा देवी गंभीरान्तःस्मिता जगौ ।
दुर्गा भगवती भद्रा ययेदं धार्यते जगत् ॥

देव्युवाच ॥ १७ ॥

सत्यमुक्तं त्वया नात्र मिथ्या किञ्चित्त्वयोदितम् ।
त्रैलोक्याधिपतिः शुंभो निशुंभश्चापि तादृशः ॥
किंत्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथम् ।
श्रूयतामल्पबुद्धित्वात्प्रतिज्ञा या कृता पुरा ॥
यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ।
यो मे प्रतिबलो लोके स मे भर्ता भविष्यति ॥
तदागच्छतु शुंभोऽत्र निशुंभो वा महासुरः ।
मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे लघु ॥

दूत उवाच ॥ २२ ॥

अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः ।
त्रैलोक्ये कः पुमांस्तिष्ठेदग्रे शुंभनिशुंभयोः ॥

अन्येषामपि दैत्यानां सर्वे देवा न वै युधि ।
तिष्ठन्ति सम्मुखे देवि किं पुनः स्त्री त्वमेकिका ॥

इन्द्राद्याः सकला देवास्तस्थुर्येषां न संयुगे ।
शुंभादीनां कथं तेषां स्त्री प्रयास्यासि संमुखम् ॥

सा त्वं गच्छ मयैवोक्ता पार्श्वे शुंभनिशुंभयोः ।
केशाकर्षणनिर्धूतगौरवा मा गमिष्यसि ॥ २३ ॥

देव्युवाच ॥ २७ ॥

एवमेतद्बली शुंभो निशुंभश्चापि तादृशः ।
किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ॥

स त्वं गच्छ मयैवोक्तं यदेतत्सर्वमादितः ।
तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत् ॥

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये देवीदूतसंवादो नाम पंचमोऽध्यायः ॥ ५ ॥

उवाच ॥ ९ ॥ त्रिपान्मन्त्राः ॥ ६६ ॥ श्लोकमन्त्राः ॥ ५४ ॥ एवं ॥ १२९ ॥ एवमादितः ॥ ३८८ ॥

॥ अथ षष्ठोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

इत्याकर्ण्य वचो देव्याः स दूतोऽमर्षपूरितः ।
समाचष्ट समागम्य दैत्यराजाय विस्तरात् ॥

तस्य दूतस्य तद्वाक्यमाकर्ण्यासुरराट् ततः ।
सक्रोधः प्राह दैत्यानामधिपं धूम्रलोचनम् ॥ ३ ॥
हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः ।
तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम् ॥
तत्परित्राणकः कश्चिद्यदि चोत्तिष्ठते परः ।
स हन्तव्योऽमरो वापि यक्षो गन्धर्व एव वा ॥

ऋषिरुवाच ॥ ६ ॥

तेनाज्ञप्तस्ततः शीघ्रं स दैत्यो धूम्रलोचनः ।
वृतः षष्ट्या सहस्राणामसुराणां द्रुतं ययौ ॥
स दृष्ट्वा तां ततो देवीं तुहिनाचलसंस्थिताम् ।
जगादोच्चैः प्रयाहीति पार्श्वं शुंभनिशुंभयोः ॥

न चेत्प्रीत्याद्य भवती मद्भर्तारमुपैष्यति ।
ततो बलान्नयाम्येष केशाकर्षणविह्वलाम् ॥ ९ ॥

देव्युवाच ॥ १० ॥

दैत्येश्वरेण प्रहितो बलवान्बलसंवृतः ।
बलान्नयसि मामेवं ततः किं ते करोम्यहम् ॥

ऋषिरुवाच ॥ १२ ॥

इत्युक्तः सोऽभ्यधावत्तामसुरो धूम्रलोचनः ।
हुंकारेणैव तं भस्म सा चकाराम्बिका ततः ॥
अतिक्रुद्धं महासैन्यमसुराणां तथाम्बिका ।
ववर्ष सायकैस्तीक्ष्णैस्तथा शक्तिपरश्वधैः ॥
ततो धुतसटः कोपात्कृत्वा नादं सुभैरवम् ।
चचारासुरसेनायां सिंहो देव्याः स्ववाहनः ॥

काांश्चित्करप्रहारेण दैत्यानास्येन चापरान् ।
आक्रम्य चरणेनान्याञ्जघान च महासुरान् ॥
केषांचित्पाटयामास नखैः कोष्ठानि केसरी ।
तथा तलप्रहारेण शिरांसि कृतवान्पृथक् ॥
विच्छिन्नबाहुशिरसः कृतास्तेन तथापरे ।
पपौ च रुधिरं कोष्ठादन्येषां धुतकेसरः ॥
क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना ।
तेन केसरिणा देव्या वाहनेनातिकोपिना ॥
श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम् ।
बलं च क्षपितं सर्वं देवीकेसरिणा ततः ॥
चुकोप दैत्याधिपतिः शुंभः प्रस्फुरिताधरः ।
आज्ञापयामास च तौ चण्डमुण्डौ महासुरौ ॥

हे चण्ड हे मुण्ड बलैर्बहुभिः परिवारितौ ।
तत्र गच्छथ गत्वा च सा समानीयतां लघु ॥
केशेष्वाकृष्य बध्वा वा यदि वः संशयो युधि ।
तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम् ॥ २३ ॥
तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ।
शीघ्रमागम्यतां बद्ध्वा गृहीत्वा तामथांबिकाम् ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये धूम्रलोचनवधो नाम
षष्ठोऽध्यायः ॥ ६ ॥

उवाच ॥ ४ ॥ अर्ध ॥ ० ॥ श्लोक-मन्त्राः ॥ २० ॥ एवं ॥ २४ ॥ एव-मादितः ॥ ४१२ ॥

## ॥ अथ सप्तमोऽध्यायः ॥

---

ऋषिरुवाच ॥ १ ॥

तेनाज्ञप्तास्ततो दैत्याश्चण्डमुण्डपुरोगमाः ।
चतुरङ्गबलोपेता ययुरभ्युद्यतायुधाः ॥ २ ॥

[अहं पूर्वमहं पूर्वमित्येवं युद्धलालसाः ।
ग्रहीतुकामास्तां देवीं शूलपट्टसधारिणः ॥ ]

ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थिताम् ।
सिंहस्योपरि शैलेन्द्रशृङ्गे महति कांचने ॥

ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः ।
आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ॥

ततः कोपं चकारोच्चैरम्बिका तानरीन्प्रति ।
कोपेन चास्या वदनं मषीवर्णमभूत्तदा ॥ ५ ॥

भ्रुकुटीकुटिलात्तस्या ललाटफलकाद्द्रुतम् ।
काळी कराळवदना विनिष्क्रान्तासिपाशिनी ॥

विचित्रखट्वाङ्गधरा शिरोमालाविभूषणा ।
द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा ॥ ७ ॥

अतिविस्तारवदना जिह्वाचलनभीषणा ।
निमग्ना रक्तनयना नादापूरितदिङ्मुखा ॥ ८ ॥

सा वेगेनाभिपतिता घातयन्ती महासुरान् ।
सैन्ये तत्र सुरारीणामभक्षयत तद्बलम् ॥ ९ ॥

पार्ष्णिग्राहांकुशग्राहियोधघंटासमन्वितान् ।
समादायैकहस्तेन मुखे चिक्षेप वारणान् ॥

तथैव योधांस्तुरगै रथं सारथिना सह ।
निक्षिप्य वक्त्रे दशनैश्चर्वयंत्यतिभैरवम् ॥ ११ ॥
एकं जग्राह केशेषु ग्रीवायामथ चापरम् ।
पादेनाक्रम्य चैवान्यमुरसान्यमपोथयत् ॥ १२ ॥
तैर्मुक्तानि च शस्त्राणि महास्त्राणि तथासुरैः ।
मुखेन जग्राह रुषा दशनैर्मथितान्यपि ॥ १३ ॥
बलिनां तद्बलं सर्वमसुराणां दुरात्मनाम् ।
ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तदा ॥ १४ ॥
असिना निहताः केचित्केचित्खट्वांगताडिताः ।
जग्मुर्विनाशमसुरा दंताग्राभिहतास्तथा ॥ १५ ॥
क्षणेन तद्बलं सर्वमसुराणां निपातितम् ।
दृष्ट्वा चण्डोऽभिदुद्राव तां काळीमतिभीषणाम् ॥

शरवर्षैर्महाभीमैर्भीमाक्षीं तां महासुरः ।
छादयामास चक्रैश्च मुण्डः क्षिप्तैः सहस्रशः ॥
तानि चक्राण्यनेकानि विशमानानि तन्मुखम् ।
बभुर्यथार्कबिम्बानि सुबहूनि घनोदरम् ॥
ततो जहासातिरुषा भीमं भैरवनादिनी ।
काळी कराळवदना दुर्दर्शदशनोज्ज्वला ॥ १९ ॥
उत्थाय च महासिंहं काळी चण्डमधावत ।
गृहीत्वा चास्य केशेषु शिरस्तेनासिनाच्छिनत् ॥
अथ मुण्डोऽभ्यधावत्तां दृष्ट्वा चण्डं निपातितम् ।
तमप्यपातयद्भूमौ सा खड्गाभिहतं रुषा ॥
हतशेषं ततः सैन्यं दृष्ट्वा चण्डं निपातितम् ।
मुण्डं च सुमहावीर्यं दिशो भेजे भयातुरम् ॥

शिरश्चण्डस्य काली च गृहीत्वा मौण्डमेव च ।
प्राह प्रचण्डाट्टहासमिश्रमभ्येत्य चण्डिकाम् ॥

मया तवात्रोपहृतौ चण्डमुण्डौ महापशू ।
युद्धयज्ञे स्वयं शुंभं निशुभं च हनिष्यसि ॥

ऋषिरुवाच ॥ २५ ॥

तावानीतौ ततो दृष्ट्वा चण्डमुण्डौ महासुरौ ।
उवाच कालीं कल्याणी ललितं चण्डिका वचः ॥

यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवी भविष्यसि ॥

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये चण्डमुण्डवधो नाम
सप्तमोऽध्यायः ॥ ७ ॥

उवाच ॥ २ ॥ श्लोकाः ॥ २५ ॥ एवं ॥ २७ ॥ एवमादितः ॥ ४३९ ॥

## ॥ अष्टमोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

चण्डे च निहते दैत्ये मुण्डे च विनिपातिते ।
बहुळेषु च सैन्येषु क्षयितेष्वसुरेश्वरः ॥ २ ॥
ततः कोपपराधीनचेताः शुम्भः प्रतापवान् ।
उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह ॥
अद्य सर्वबलैर्दैत्याः षडशीतिरुदायुधाः ।
कम्बूनां चतुराशीतिर्निर्यान्तु स्वबलैर्वृताः ॥

कोटिवीर्याणि पञ्चाशदसुरणां कुलानि वै ।
शतं कुलानि धौम्राणां निर्गच्छन्तु ममाज्ञया ॥

कालका दौर्हृदा मौर्वाः कालकेयास्तथसुराः ।
युद्धाय सज्जा निर्यान्तु आज्ञया त्वरिता मम ॥

इत्याज्ञाप्यासुरपतिः शुम्भो भैरवशासनः ।
निर्जगाम महासैन्यसहस्रैर्बहुभिर्वृतः ॥

[उत्पाता बहवस्तत्र प्रादुरासन् सहस्रशः ।
युगान्तमेघा ववृषुरस्थिशोणितकर्दमम् ॥

क्रव्यादा व्यनदन् घोराः शिवाश्चापि ववाशिरे ।
तानुत्पातानानादृत्य प्रययौ स हिमाचलं ॥]

आयान्तं चण्डिका दृष्ट्वा तत्सैन्यमतिभीषणम् ।
ज्यास्वनैः पूरयामास धरणीगगनान्तरम् ॥

ततः सिंहो महानादमतीव कृतवान्नृप ।
घण्टास्वनेन तन्नादमम्बिका चोपबृंहयत् ॥

धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा ।
निनादैर्भीषणैः काली जिग्ये विस्तारितानना ।

तं निनादमुपश्रुत्य दैत्यसैन्यैश्चतुर्दिशम् ।
देवी सिंहस्तथा काली सरोषैः परिवारिताः ॥

एतस्मिन्नन्तरे भूप विनाशाय सुरद्विषाम् ।
जयायामरसिंहानामतिवीर्यबलान्विताः ॥

ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥

यस्य देवस्य यद्रूपं यथा भूषणवाहनम् ।
तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥

हंसयुक्तविमानस्था साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणीत्यभिधीयते ॥

माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥

कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥

तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ।
शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥

यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥

नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ।
प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ २० ॥

वज्रहस्ता तथा चैन्द्री गजराजोपरि स्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥
ततः परिवृतस्ताभिरीशानो देवशक्तिभिः ।
हन्यन्तामसुराः शीघ्रमायाहीत्याह चण्डिकाम् ॥
ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा ।
चण्डिकाशक्तिरत्युग्रा शिवाशतविनादिनी ॥
सा चाह धूम्रजटिलमीशानमपराजिता ।
दूतस्त्वं गच्छ भगवन्पार्श्वं शुंभनिशुंभयोः ॥
ब्रूहि शुंभं निशुंभं च दानवावतिगर्वितौ ।
ये चान्ये दानवास्तत्र युद्धाय समुपस्थिताः ॥
त्रैलोक्यमिन्द्रो लभतां देवाः संतु हविर्भुजः ।
यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥

बलावलेपाद्‌थ चेद्भवन्तो युद्धकांक्षिणः ।
तदागच्छत तृप्यन्तु मच्छिवाः पिशितेन वः ॥
यतो नियुक्तो दूतत्वे तया देव्या शिवः स्वयम् ।
शिवदूतीति लोकेऽस्मिंस्ततः सा ख्यातिमागता ॥
तेऽपि श्रुत्वा वचो देव्याः शर्वाख्यातं महासुराः ।
अमर्षापूरिता जग्मुर्यत्र कात्यायनी स्थिता ॥
ततः प्रथममेवाग्रे शरशक्त्यृष्टिवृष्टिभिः ।
ववर्षुरुद्धतामर्षास्तां देवीममरारयः ॥ ३० ॥
सा च तत्प्रहितान्बाणाञ्छूलशक्तिपरश्वधान् ।
चिच्छेद लीलयाध्मातधनुर्मुक्तैर्महेषुभिः ॥ ३१ ॥
तस्याग्रतस्तथा काली शूलपातविदारितान् ।
खट्वाङ्गपोथितांश्चारीन् कुर्वती व्यचरत्तदा ॥

कमण्डलुजलाक्षेपहतवीर्यान्हतौजसः ।
ब्रह्माणी चाकरोच्छत्रून्येन येन स्म धावति ॥

माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी ।
दैत्याञ्जघान कौमारी तथा शक्त्यातिकोपना ॥

ऐंद्रीकुलिशपातेन शतशो दैत्यदानवाः ।
पेतुर्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ॥

तुण्डप्रहारविध्वस्ता दंष्ट्राग्रक्षतवक्षसः ।
वाराहमूर्त्या न्यपतंश्चक्रेण च विदारिताः ॥

नखैर्विदारितांश्चान्यान्भक्षयन्ती महासुरान् ।
नारासिंही चचाराजौ नादापूरितदिङ्मुखा ॥

चण्डाट्टहासैरसुराः शिवदूत्यभिदूषिताः ।
पेतुः पृथिव्यां पतितांस्तांश्चखादाथ सा रुषा ॥

इति मातृगणं क्रुद्धं मर्दयन्तं महासुरान् ।
दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ॥

पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान् ।
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः ॥

[भागिनेयो महावीर्यस्तयोः शुंभनिशुंभयोः ।
क्रोधवत्यास्सुतो राजन्महाबलपराक्रमः ॥]

रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः ।
समुत्पतति मेदिन्यां तत्प्रमाणो महासुरः ॥

युयुधे स गदापाणिरिन्द्रशक्त्या महासुरः ।
ततश्चैंद्री स्ववज्रेण रक्तबीजमताडयत् ॥

कुलिशेनाहतस्याशु बहु सुस्राव शोणितम् ।
समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः ॥

यावन्तः पतितास्तस्य शरीराद्रक्तबिंदवः ।
तावन्तः पुरुषा जातास्तद्वीर्यबलविक्रमाः ॥
ते चापि युयुधुस्तत्र पुरुषा रक्तसंभवाः ।
समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ॥
पुनश्च वज्रपातेन क्षतमस्य शिरो यदा ।
ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः ॥
वैष्णवी समरे चैनं चक्रेणाभिजघान ह ।
गदया ताडयामास ऐंद्री तमसुरेश्वरम् ॥
वैष्णवीचक्रभिन्नस्य रुधिरस्रावसंभवैः ।
सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ॥
शक्त्या जघान कौमारी वाराही च तथासिना ।
माहेश्वरी त्रिशूलेन रक्तबीजमताडयत् ॥

स चापि गदया दैत्यः सर्वा एवाहनत्पृथक् ।
मातृः कोपसमाविष्टो रक्तबीजो महासुरः ॥
तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि ।
पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः ॥
तैश्चासुरासृक्संभूतैरसुरैः सकलं जगत् ।
व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥
[ततो बभाषिरेऽन्योन्यं दिवि दिव्यविमानगाः ।
न चेदृशस्संबभूव भविता वा महासुरः ॥
न सांप्रतं वा जगति रक्तबीजमृतेऽसुरम् ॥]
तान्विषण्णान्सुरान्दृष्ट्वा चण्डिका सत्वरं वचः ।
उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु ॥
मच्छस्त्रपातसंभूतान् रक्तबीजान्महासुरान् ।

रक्तबिन्दोः प्रतीच्छ त्वं वक्त्रेणानेन वेगिता ॥
भक्षयन्ती चर रणे तदुत्पन्नान्महासुरान् ।
एवमेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥

भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यंति चापरे ।
इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम् ।
मुखेन काळी जगृहे रक्तबीजस्य शोणितम् ॥

ततोऽसावाजघानाथ गदया तत्र चण्डिकाम् ।
न चास्या वेदनां चक्रे गदापातोऽल्पिकामपि ॥

तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ।
यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति ॥

मुखे समुद्गता येऽस्या रक्तपातान्महासुराः ।
तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम् ॥

देवी शूलेन वज्रेण बाणैरसिभिर्ऋष्टिभिः ।
जघान रक्तबीजं तं चामुण्डा पीतशोणितम् ॥
स पपात महीपृष्ठे शस्त्रसंघसमाहतः ।
नीरक्तश्च महीपाल रक्तबीजो महासुरः ॥
[ एवमेते क्षयं नीता रक्तबीजसमुद्भवाः । ]
ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ।
तेषां मातृगणो यातो ननर्तासृङ्मदोद्धतः ॥

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये रक्तबीजवधो नाम
अष्टमोऽध्यायः ॥ ८ ॥

उवाच ॥ १ ॥ अर्धं ॥ १ ॥ श्लोकाः ॥ ६१ ॥
एवं ॥ ६३ ॥ एवमादितः ॥ ५०२ ॥

## ॥ अथ नवमोऽध्यायः ॥

राजोवाच ॥ १ ॥

विचित्रमिदमाख्यातं भगवन्भवता मम ।
देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितम् ॥

भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते ।
चकार शुंभो यत्कर्म निशुंभश्चातिकोपनः ॥

ऋषिरुवाच ॥ ४ ॥

चकार कोपमतुलं रक्तबीजे निपातिते ।
शुंभासुरो निशुंभश्च हतेष्वन्येषु चाहवे ॥

हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् ।
अभ्यधावन्निशुंभोऽथ मुख्ययासुरसेनया ॥

तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः ।
सन्दष्टोष्ठपुटाः क्रुद्धा हंतुं देवीमुपाययुः ॥

आजगाम महावीर्यः शुंभोऽपि स्वबलैर्वृतः ।
निहन्तुं चण्डिकां कोपात्कृत्वा युद्धं तु मातृभिः ॥

ततो युद्धमतीवासीद्देव्याः शुंभनिशुंभयोः ॥
शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ॥ ९ ॥

चिच्छेद तान्छरांस्ताभ्यां चण्डिका स्वशरोत्करैः ।
ताडयामास चांगेषु शस्त्रौघैरसुरेश्वरौ ॥ १० ॥

निशुंभो निशितं खड्गं चर्म चादाय सुप्रभम् ।
अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ॥

ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् ।
निशुंभस्याशु चिच्छेद चर्म चाप्यष्टचन्द्रकम् ॥

छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सोऽसुरः ।
तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् ॥
कोपाध्मातो निशुंभोऽथ शूलं जग्राह दानवः ।
आयान्तं मुष्टिपातेन देवी तच्चाप्यचूर्णयत् ॥
आविध्याथ गदां सोऽपि चिक्षेप चण्डिकां प्रति ।
सापि देव्यास्त्रिशूलेन भिन्ना भस्मत्वमागता ॥
ततः परशुहस्तं तमायान्तं दैत्यपुङ्गवम् ।
आहत्य देवी बाणौघैरपातयत भूतले ॥ १३ ॥
तस्मिन्निपतिते भूमौ निशुंभे भीमविक्रमे ।
भ्रातर्यतीव संक्रुद्धः प्रययौ हन्तुमम्बिकाम् ॥
स रथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः ।
भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः ॥ १८ ॥

तमायान्तं समालोक्य देवी शंखमवादयत् ।
ज्याशब्दं चापि धनुषश्चकारातीव दुस्सहम् ॥
पूरयामास ककुभो निजघंटास्वनेन च ।
समस्तदैत्यसैन्यानां तेजोवधविधायिना ॥ २० ॥
ततः सिंहो महानादैस्त्याजितेभमहामदैः ।
पूरयामास गगनं गां तथैव दिशो दश ॥
ततः काळी समुत्पत्य गगनं क्ष्मामताडयत् ।
कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः ॥
अट्टाट्टहासमशिवं शिवदूती चकार ह ।
तैः शब्दैरसुरास्त्रेसुः शुंभः कोपं परं ययौ ॥
दुरात्मंस्तिष्ठ तिष्ठेति व्याजहाराम्बिका यदा ।
तदा जयेत्यभिहितं देवैराकाशसंस्थितैः ॥

शुंभेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा ।
आयान्ती वह्निकूटाभा सा निरस्ता महोल्कया ॥

सिंहनादेन शुंभस्य व्याप्तं लोकत्रयान्तरम् ।
निर्घातनिःस्वनो घोरो जितवानवनीपते ॥

शुंभमुक्ताञ्छरान्देवी शुंभस्तत्प्रहिताञ्छरान् ।
चिच्छेद स्वशरैरुग्रैः शतशोऽथ सहस्रशः ॥

ततः सा चण्डिका क्रुद्धा शूलेनाभिजघान तम् ।
स तदाभिहतो भूमौ मूर्च्छितो निपपात ह ॥

ततो निशुंभः संप्राप्य चेतनामात्तकार्मुकः ।
आजघान शरैर्देवीं काळीं केसरिणं तथा ॥

पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः ।
चक्रायुधेन दितिजश्छादयामास चण्डिकाम् ॥

ततो भगवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी ।
चिच्छेद देवी चक्राणि स्वशरैः सायकांश्च तान् ॥

ततो निशुंभो वेगेन गदामादाय चण्डिकाम् ।
अभ्यधावत वै हन्तुं दैत्यसैन्यसमावृतः ॥ ३२ ॥

तस्यापतत एवाशु गदां चिच्छेद चण्डिका ।
खड्गेन शितधारेण स च शूलं समाददे ॥

शूलहस्तं समायान्तं निशुंभममरार्दनम् ।
हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका ॥

भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः ।
महाबलो महावीर्यस्तिष्ठेति पुरुषो वदन् ॥

तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः ।
शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि ॥

ततः सिंहश्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान् ।
असुरांस्तांस्तथा काळी शिवदूती तथापरान् ॥
कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः ।
ब्रह्माणीमन्त्रपूतेन तोयेनान्ये निराकृताः ॥
माहेश्वरीत्रिशूलेन भिन्नाः पेतुस्तथापरे ।
वाराहीतुण्डघातेन केचिच्चूर्णीकृता भुवि ॥
खंडं खंडं च चक्रेण वैष्णव्या दानवाः कृताः ।
[ नारसिंहीसुतीक्ष्णाग्रनखैः कोचिद्विदारिताः ॥ ]
वज्रेण चैन्द्रीहस्ताग्रविमुक्तेन तथापरे ॥
कोचिद्विनेशुरसुराः केचिन्नष्टा महाहवात् ।
[ काळरात्रिहताश्चण्डाः कालपाशेन बन्धिताः । ]
भक्षिताश्चापरे काळीशिवदूतीमृगाधिपैः ॥ ४१ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये निशुंभवधो नाम
नवमोऽध्यायः ॥ ९ ॥
उवाच ॥ २ ॥ श्लोकाः ॥ ३९ ॥ एवं ॥ ४१ ॥
एवमादितः ॥ ५४३ ॥

## ॥ अथ दशमोऽध्यायः ॥

---

ऋषिरुवाच ॥ १ ॥

निशुंभं निहतं दृष्ट्वा भ्रातरं प्राणसंमितम् ।
हन्यमानं बलं चैव शुंभः क्रुद्धोऽब्रवीद्वचः ॥

बलावलेपादुष्टे त्वं मा दुर्गे गर्वमावह ।
अन्यासां बलमाश्रित्य युध्यसे चातिमानिनी ॥

देव्युवाच ॥ ४ ॥

एकैवाहं जगत्यत्र द्वितीया का ममापरा ।
पश्यैता दुष्ट मय्येव विशंत्यो मद्विभूतयः ॥

ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम् ।
तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदाम्बिका ॥

देव्युवाच ॥ ७ ॥

अहं विभूत्या बहुभिरिह रूपैर्यदास्थिता ।
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरे भव ॥

ऋषिरुवाच ॥ ९ ॥

ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः ।
पश्यतां सर्वदेवानामसुराणां च दारुणम् ॥
शरवर्षैः शितैः शस्त्रैस्तथा चास्त्रैः सुदारुणैः ।
तयोर्युद्धमभूद्भूप सर्वलोकभयङ्करम् ॥ ११ ॥
दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथाम्बिका ।
बभञ्ज तानि दैत्येन्द्रस्तत्प्रतीघातकर्तृभिः ॥
मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी ।
बभञ्ज लीलयैवोग्रहुङ्कारोच्चारणादिभिः ॥
[ दिव्यवर्षसहस्रन्तु गतमासीद्विशांपते ।
विमानस्थास्ततो देवा ऋषयश्च बभाषिरे ।
न चास्त्येवंविधं युद्धं प्रागासीद्भविता न च ॥ ]

ततः शरशतैर्देवीमाच्छादयत सोऽसुरः ।
सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः ॥

छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथाददे ।
चिच्छेद देवी चक्रेण तामप्यस्य करे स्थिताम् ॥

ततः खड्गमुपादाय शतचन्द्रं च भानुमत् ।
अभ्यधावत तां देवीं दैत्यानामधिपेश्वरः ॥

तस्यापतत एवाशु खड्गं चिच्छेद चण्डिका ।
धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्ककरामलम् ॥

अश्वांश्च पातयामास रथं सारथिना सह ।
हताश्वः स तदा दैत्यश्छिन्नधन्वा विसारथिः ॥

जग्राह मुद्गरं घोरमंबिकानिधनोद्यतः ।
चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः ॥

तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ।
स मुष्टिं पातयामास हृदये दैत्यपुङ्गवः ॥

देव्यास्तं चापि सा देवी तलेनोरस्यताडयत् ।
तलप्रहाराभिहतो निपपात महीतले ॥ २१ ॥

स दैत्यराजः सहसा पुनरेव तथोत्थितः ।
उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः ॥

तत्रापि सा निराधारा युयुधे तेन चण्डिका ॥

नियुद्धं खे तदा दैत्यश्चण्डिका च परस्परम् ।
चक्रतुः प्रथमं सिद्धमुनिविस्मयकारकम् ॥

ततो नियुद्धं सुचिरं कृत्वा तेनाम्बिका सह ।
उत्पाट्य भ्रामयामास चिक्षेप धरणीतले ॥

स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगवान् ।
अभ्यधावत दुष्टात्मा चण्डिकानिधनेच्छया ॥

तमायान्तं ततो देवी सर्वदैत्यजनेश्वरम् ।
जगत्यां पातयामास भित्त्वा शूलेन वक्षसि ॥

स गतासुः पपातोर्व्यां देवीशूलाग्रविक्षतः ।
चालयन्सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम् ॥

ततः प्रसन्नमखिलं हते तस्मिन्दुरात्मनि ।
जगत्स्वास्थ्यमतीवासीन्निर्मलं चाभवन्नभः ॥

उत्पातमेघाः सोल्का ये प्रागासंस्ते शमं ययुः ।
सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते ॥

ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ।
बभूवुर्निहते तस्मिन् गन्धर्वा ललितं जगुः ॥

अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः ।
ववुः पुण्यास्तथा वातास्सुप्रभोऽभूद्दिवाकरः ॥
[शान्तचारो ग्रहगणो रराजेन्दुर्नभस्तले ।
जज्वलुश्चाग्नयश्शान्ताः शान्ता दिग्गजनिस्वनाः॥]

इति श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये शुंभवधो नाम
दशमोऽध्यायः ॥ १० ॥

उवाच ॥ ४ ॥ अर्धं ॥ १ ॥ श्लोकाः ॥ २७ ॥
एवं ॥ ३२ ॥ एवमादितः ॥ ५७५ ॥

॥ अथ एकादशोऽध्यायः ॥

ऋषिरुवाच ॥ १ ॥

देव्या हते तत्र महासुरेन्द्रे
सेन्द्राः सुरा वह्निपुरोगमास्ताम् ।
कात्यायनीं तुष्टुवुरिष्टलाभा-
द्विकाशिवक्त्राब्जविकासिताशाः ॥ २ ॥

देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं
त्वमीश्वरी देवि चराचरस्य ॥ ३ ॥

आधारभूता जगतस्त्वमेका
महीस्वरूपेण यतः स्थितासि ।
अपांस्वरूपस्थितया त्वयैत-
दाप्यायते कृत्स्नमलंघ्यवीर्ये ॥ ४ ॥

त्वं वैष्णवी शक्तिरनन्तवीर्या
विश्वस्य बीजं परमासि माया ।
संमोहितं देवि समस्तमेत-
त्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ५ ॥

विद्याः समस्तास्तव देवि भेदाः
स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया पूरितमम्बयैत-
त्का ते स्तुतिः स्तव्यपरा परोक्तिः ॥ ६ ॥

सर्वभूतात्मिके देवि भुक्तिमुक्तिप्रदायिनि ।
त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ॥

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ।
स्वर्गापवर्गदे देवि नारायणि नमोस्तु ते ॥ ८ ॥

कलाकाष्ठादिरूपेण परिणामप्रदायिनि ।
विश्वस्योपरतौ शक्ते नारायणि नमोस्तु ते ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते ॥

सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोस्तु ते ॥

शरणागतदीनार्तपरित्राणपरायणे ।
आपन्नार्तिहरे देवि नारायणि नमोस्तु ते ॥ १२ ॥

हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि ।
कौशांभःपाविके देवि नारायणि नमोस्तु ते ॥

त्रिशूलचन्द्राहिधरे महावृषभवाहिनि ।
माहेश्वरीस्वरूपेण नारायणि नमोस्तु ते ॥

मयूरकुक्कुटयुते महाशक्तिधरेऽनघे ।
कौमारीरूपसंस्थाने नारायणि नमोस्तु ते ॥

शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे ॥
प्रसीद वैष्णवीरूपे नारायणि नमोस्तु ते ॥

गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे ।
वराहरूपिणि शिवे नारायणि नमोस्तु ते ॥

नृसिंहरूपेणोग्रेण हन्तुं दैत्यान्कृतोद्यमे ।
त्रैलोक्यत्राणमहिते नारायणि नमोस्तु ते ॥

किरीटिनि महावज्रे सहस्रनयनोज्ज्वले ।
वृत्रप्राणहरे चैन्द्रि नारायणि नमोस्तु ते ।।

शिवदूतीस्वरूपेण हतदैत्यमहाबले ।
घोररूपे महारावे नारायणि नमोस्तु ते ।।

दंष्ट्राकराळवदने शिरोमालाविभूषणे ।
चामुण्डे मुण्डमथने नारायणि नमोस्तु ते ।।

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टे स्वधे ध्रुवे ।
महारात्रि महामाये नारायणि नमोस्तु ते ।।

मेधे सरस्वति शिवे भूतिदायिनि तामसि ।
नियतं त्वं प्रसीदेशे नारायणि नमोस्तु ते ।।

[सर्वतःपाणिचरणे सर्वतोऽक्षिशिरोमुखे ।
सर्वतःश्रवणघ्राणे नारायणि नमोस्तु ते ।।]

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ॥

ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव ॥

असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥

रोगानशेषानपहंसि तुष्टा
  कामानभीष्टानखिलान्ददासि ।
त्वामाश्रितानां न विपन्नराणाम्
  त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ २९ ॥

एतत्कृतं यत्कदनं त्वयाद्य
  धर्मद्विषां देवि महासुराणाम् ।
रूपैरनेकैर्बहुधात्ममूर्तिं
  कृत्वाम्बिके तत् प्रकरोति कान्या ॥ ३० ॥

विद्यासु शास्त्रेषु विवेकदीपे-
  ष्वाद्येषु वाक्येषु च का त्वदन्या ।
ममत्वगर्तेऽतिमहान्धकारे
  विभ्रामयत्येतदतीव विश्वम् ॥ ३१ ॥

रक्षांसि यत्रोग्रविषाश्च नागा
यत्रारयो दस्युबलानि यत्र ।
दावानलो यत्र भवाब्धिमध्ये
तत्र स्थिता त्वं परिपासि विश्वम् ॥

विश्वेश्वरि त्वं परिपासि विश्वम्
विश्वात्मिका धारयसीह विश्वम् ।
विश्वेशवन्द्या भवती भवन्ति
विश्वाश्रया ये त्वयि भक्तिनम्राः ॥ ३३ ॥

देवि प्रसीद परिपालय नोऽरिभीते-
र्नित्यं यथाऽसुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां प्रशमं नयाशु
उत्पातपापजनितांश्च महोपसर्गान् ॥

प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥

देव्युवाच ॥ ३६ ॥

वरदाहं सुरगणा वरं यं मनसेच्छथ ।
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥

देवा ऊचुः ॥ ३८ ॥

सर्वबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ३९ ॥

देव्युवाच ॥ ४० ॥

वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे ।
शुंभो निशुंभश्चैवान्यावुत्पत्स्येते महासुरौ ॥

नन्दगोपगृहे जाता यशोदागर्भसंभवा ।
ततस्तौ नाशयिष्यामि विंध्याचलनिवासिनी ॥

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले ।
अवतीर्य हनिष्यामि वैप्रचित्तांश्च दानवान् ॥

भक्षयंत्याश्च तानुग्रान् वैप्रचित्तान्महासुरान् ।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥

ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥

भूयश्च शतवार्षिक्यामनावृष्ट्यामनंभसि ।
मुनिभिः संस्तुता भूमौ संभविष्याम्ययोनिजा ॥

ततः शतेन नेत्राणां निरीक्षिष्याम्यहं मुनीन् ।
कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ॥

ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ।
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥

शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि ॥

तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ।
दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ॥

पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ।
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥

तदा मां मुनयः सर्वे स्तोष्यंत्यानम्रमूर्तयः ।
भीमादेवीति विख्यातं तन्मे नाम भविष्यति ॥

यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ।
तदाहं भ्रामरं रूपं कृत्वा संख्येयषट्पदम् ॥

त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ।
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः ॥

इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये नारायणीस्तुतिर्नाम
एकादशोऽध्यायः ॥ ११ ॥

उवाच ॥ ४ ॥ अर्धमन्त्रः ॥ १ ॥
श्लोकमन्त्राः ॥ ५० ॥
एवं ॥ ५५ ॥ एवमादितः ॥ ६३० ॥

## ॥ अथ द्वादशोऽध्यायः ॥

---

देव्युवाच ॥ १ ॥

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ।
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥

मधुकैटभनाशं च महिषासुरघातनम् ।
कीर्तयिष्यन्ति ये तद्वद्वधं शुंभनिशुंभयोः ॥ ३ ॥

अष्टम्यां च नवम्यां च चतुर्दश्यां विशेषतः ।
श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ॥

न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः ।
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥

शत्रुभ्यो न भयं तस्य दस्युतो वा न राजतः ।
न शस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ।
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥

उपसर्गानशेषांस्तु महामारीसमुद्भवान् ।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥

यत्रैतत्पठ्यते सम्यङ् नित्यमायतने मम ।
सदा न तद्विमोक्ष्यामि सांनिध्यं तत्र मे स्थिरम् ॥

बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ।
सर्वं ममैतन्माहात्म्यमुच्चार्यं श्राव्यमेव च ॥

जानताजानता वापि बलिपूजां यथाकृताम् ।
प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं तथाकृतम् ॥

शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥

सर्वबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥

श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥

रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ।
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ॥

शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने ।
ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥

उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः ।
दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥

बालग्रहाभिभूतानां बालानां शान्तिकारकम् ।
संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥

दुर्वृत्तानामशेषाणां बलहानिकरं परम् ।
रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥

सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥

पशुपुष्पार्घधूपैश्च गन्धदीपैस्तथोत्तमैः ।
विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम् ॥

अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ।
प्रीतिर्मे क्रियते सास्मिन् सकृदुच्चरिते श्रुते ॥

श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ।
रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥

युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ।
तस्मिञ्छ्रुते वैरिकृतं भयं पुंसां न जायते ॥

युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ।
ब्रह्मणा च कृतास्तास्तु प्रयच्छन्तु शुभां मतिम् ॥

अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः ।
दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ॥

सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः ।
राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोपि वा ॥

आघूर्णितो वा वातेन स्थितः पोते महार्णवे ।
पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे ॥

सर्वबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ।
[ महासर्पेण दष्टो वा सर्पेणानुगतोऽपि वा ॥ ]

स्मरन्ममैतच्चरितं नरो मुच्येत सङ्कटात् ॥ २९ ॥

मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तथा ।
दूरादेव पलायन्ते स्मरतश्चरितं मम ॥ ३० ॥

ऋषिरुवाच ॥ ३१ ॥

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ।
पश्यतां सर्वदेवानां तत्रैवान्तरधीयत ॥ ३२ ॥

तेऽपि देवा निरातङ्काः स्वाधिकारान्यथा पुरा ।
यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः ॥ ३३ ॥

दैत्याश्च देव्या निहते शुंभे देवरिपौ युधि ।
जगद्विध्वंसके तस्मिन् महोग्रेऽतुलविक्रमे ॥

निशुंभे च महावीर्ये शेषाः पातालमाययुः ॥

एवं भगवती देवी सा नित्यापि पुनः पुनः ।
संभूय कुरुते भूप जगतः परिपालनम् ॥
तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ।
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥
व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर ।
महादेव्या महाकालीमहामारीस्वरूपया ॥
सैव काले महामारी सैव सृष्टिर्भवत्यजा ।
स्थितिं करोति भूतानां सैव काले सनातनी ॥
भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे ।
सैवाभावे तथालक्ष्मीर्विनाशायोपजायते ॥ ४० ॥
स्तुता संपूजिता पुष्पैर्गंधधूपादिभिस्तथा ।
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये भगवतीवाक्यं नाम
द्वादशोऽध्यायः ॥ १२ ॥
उवाच ॥ २ ॥ अर्ध ॥ २ ॥ श्लोक ॥ ३७ ॥
एवं ॥ ४१ ॥ एवमादितः ॥ ६७१ ॥

॥ अथ त्रयोदशोऽध्यायः ॥

---

ऋषिरुवाच ॥ १ ॥
एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् ॥ २ ॥
एवंप्रभावा सा देवी ययेदं धार्यते जगत् ।
[सा यदा प्रीयते पुंसां ते सर्वे विगतज्वराः ।]

विद्या तथैव क्रियते भगवद्विष्णुमायया ॥

तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ।
मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चापरे ॥

तामुपेहि महाराज शरणं परमेश्वरीम् ।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥

मार्कण्डेय उवाच ॥ ६ ॥

इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ।
प्रणिपत्य महाभागं तमृषिं संशितव्रतम् ॥ ७ ॥

निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ।
जगाम सद्यस्तपसे स च वैश्यो महामुने ॥

संदर्शनार्थमम्बाया नदीपुलिनमास्थितः ।
स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥

तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ।
अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥

निराहारौ यतात्मनौ तन्मनस्कौ समाहितौ ।
ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम् ॥

एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ।
परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ॥

देव्युवाच ॥ १३ ॥

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन ।
मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि वाम् ॥

मार्कण्डेय उवाच ॥ १५ ॥

ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि ।
अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ॥

सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः ।
ममेत्यहमिति प्राज्ञः संगविच्युतिकारकम् ॥

देव्युवाच ॥ १८ ॥

स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान ॥
हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥
मृतश्च भूयः सम्प्राप्य जन्म देवाद्विवस्वतः ॥
सावर्णिको मनुर्नाम भवान् भुवि भविष्यति ॥
वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवांछितः ॥
तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥

मार्कण्डेय उवाच ॥ २५ ॥

इति दत्त्वा तयोर्देवी यथाभिलषितं वरम् ।
बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ॥

एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ।
सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे
देवीमाहात्म्ये सुरथवैश्ययोर्वरप्रदानं नाम
त्रयोदशोऽध्यायः ॥ १३ ॥
उवाचमन्त्राः ॥ ३ ॥ अर्धमन्त्राः ॥ ७ ॥
श्लोकमन्त्राः ॥ १६ ॥ एवं ॥ २९ ॥
एवमादितः ॥ सप्तशती—७०० ॥

---

अथ फलश्रुतिः—

[वैश्यश्च निर्ममो ज्ञानं देवताध्यानमास्थितः ।
भविता च महायोगी परन्धामान्तरात्मनः ॥
सावर्णिकमिदं सर्वं प्रोक्तं मन्वन्तरं तव ।

तथैव देवीमाहात्म्यं महिषासुरमर्दनम् ॥
मधुकैटभनाशश्च वधः शुंभनिशुंभयोः ।
धूम्रलोचननाशश्च चण्डमुण्डवधस्तथा ॥
रक्तबीजवधः सम्यक् सर्वमेतन्मयोदितम् ।
यः पठेच्छृणुयान्नित्यं देवीमाहात्म्यमुत्तमम् ॥
सर्वाभीष्टमवाप्नोति सत्यं सत्यं वदाम्यहम् ।
ब्राह्मणस्तु पठन् शृण्वन् वेदवेदाङ्गपारगः ॥
राजा साम्राज्यमाप्नोति भवेद्वैश्यो महाधनी ।
शूद्रस्सुखमवाप्नोति कन्या भर्तारमाप्नुयात् ॥
सौमङ्गल्यं प्राप्नुयात् स्त्री माहात्म्यश्रवणात्तथा ।
इह सर्वमवाप्नोति देहान्ते मुक्तिमाप्नुयात् ॥]

॥ इति फलश्रुतिः ॥

॥ अथ उत्तरन्यासः ॥

---

ॐ खड्गिनी + परिघायुधा * हृदयाय नमः
ॐ शूलेन + स्वनेन च शिरसे स्वाहा
ॐ प्राच्यां + तथेश्वरि शिखायै वषट्
ॐ सौम्यानि + भुवम् कवचाय हुम्
ॐ खड्गशूल + सर्वतः नेत्रत्रयाय वौषट्
ॐ सर्वस्वरूपे + नमोस्तु ते अस्त्राय फट्
ॐ भूर्भुवस्सुवरोमिति दिग्विमोकः

* अथ ध्यानम्—

खड्गं + + + शुंभादिदैत्यार्दिनीम्

लमित्यादि पञ्चपूजां कृत्वा ॥

---

* * ५५—५७ पुटानि दृश्यन्ताम्

## ॥ अथ देवीसूक्तं—वैदिकम् ॥

अहं रुद्रेभिरित्यष्टर्चस्य सूक्तस्य वागांभृणी ऋषिः । श्रीआदिशक्तिर्देवता । त्रिष्टुप्छन्दः। द्वितीया जगती। श्रीजगदंबाप्रीत्यर्थे सप्तशतीजपांते जपे विनियोगः॥

ॐ अहंरुद्रेभिर्वसुभिश्चरा-
म्यहमादित्यैरुतविश्वदेवैः
अहंमित्रावरुणोभाविभ-
र्म्यहमिंद्राग्नीअहमश्विनोभा ॥ १ ॥

अहंसोमंमाहनसंविभ-
र्म्यहंत्वष्टारमुतपूषणंभगं ।

अहंदधामिद्रविणंहविष्मते
सुप्राव्ये ३ यजमानायसुन्वते ॥ २ ॥
अहंराष्ट्रीसंगमेनीवसूनां
चिकितुषीप्रथमायाज्ञियानाम ।
तांमादेवाव्यदधुःपुरुत्रा
भूरिस्थात्रां भूर्यावेशयंतीम् ॥ ३ ॥
मयासोअन्नमात्तियोविपश्यंति
यःप्राणितियईंशृणोत्युक्तम ।
अमंतवोमांतउपक्षियंति
श्रुधिश्रुतश्रद्धिवंतेवदामि ॥ ४ ॥
अहमेवस्वयमिदंवदामि
जुष्टंदेवेभिरुतमानुषेभिः ।

यंकामयेतंतंसुग्रंकृणोमि
तं ब्रह्माणंतमृषिं तं सुमेधाम् ॥ ५ ॥

अहंरुद्रायधनुरातनोमि
ब्रह्मद्विषेशरवेहंतवाऽउ ।
अहंजनायसमदंकृणो-
म्यहंद्यावापृथिवीआविवेश ॥ ६ ॥

अहंसुवेपितरमस्यमूर्ध-
न्ममयोनिरप्स्वं १ तःसमुद्रे ।
ततोवितिष्ठेभुवनानिविश्वो-
तामूंद्यांवर्ष्मणोपस्पृशामि ॥ ७ ॥

अहमेववातइवप्रवाम्या-
रभमाणाभुवनानिविश्वा ।

पुरोद्दिवापुर एनापृथिव्यै-
तावतीमाहिनासंबभूव ॥ ८ ॥

अथ फलश्रुतिः—

अहं रुद्रेभिरष्टर्चं अष्टैश्वर्यसमृद्धिदम् ।
देवीसूक्तं महाशाक्तं सर्वसिद्ध्यै जपेत् बुधः ॥

॥ इति देवीसूक्तं—वैदिकम् ॥

## ॥ देवीसूक्तं (तान्त्रिकम) ॥

अथवा

## ॥ श्री दुर्गास्तोत्रम् ॥

---

लक्ष्मीशे योगनिद्रां प्रभजति भुजगा-
धीशतल्पे सदर्पा-
दुत्पन्नौ दानवौ तच्छ्रवणमलमयां-
गौ मधुं कैटभञ्च ॥
दृष्ट्वा भीतस्य धातुः स्तुतिभिरभिनुता-
माशु तौ नाशयन्तीं
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ १ ॥

युद्धे निर्जित्य दैत्यस्त्रिभुवनमखिलं
यस्तदीयेषु धिष्ण्ये-
ष्वास्थाप्य स्वान् विधेयान् स्वयमगमदसौ
शक्रतां विक्रमेण ।
तं सामात्याप्तमित्रं महिषमभिनिहत्-
त्यास्य मूर्धाधिरूढां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ २ ॥

विश्वोत्पत्तिप्रणाशस्थितिविहृतिपरे
देवि घोरामरारि-
त्रासात् त्रातुं कुलं नः पुनरपि च महा-
सङ्कटेष्वीदृशेषु ।

आविर्भूयाः पुरस्तादिति चरणनम-
त्सर्वगीर्वाणवर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ३ ॥

हन्तुं शुंभं निशुंभं विबुधगणनुतां
हेमडोळां हिमाद्रा-
वारूढां व्यूढदर्पान् युधि निहतवतीं
धूम्रदृक्चण्डमुण्डान् ।
चामुण्डाख्यां दधानामुपशमितमहा-
रक्तबीजोपसर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ४ ॥

ब्रह्मेशस्कन्दनारायणकिटिनरसिं-
हेन्द्रशक्तीः स्वभृत्याः
कृत्वा हत्वा निशुंभं जितविबुधगणं
त्रासिताशेषलोकम् ।
एकीभूयाथ शुंभं रणशिरसि
निहत्यास्थितामात्तखड्गां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ५ ॥

उत्पन्ना नन्दजेति स्वयमवनितले
शुंभमन्यं निशुंभं
भ्रामर्याख्यारुणाख्या पुनरपि जननी
दुर्गमाख्यं निहन्तुम् ।

भीमा शाकम्भरीति त्रुटितरिपुभटां
रक्तदन्तेति जातां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ६ ॥

त्रैगुण्यानां गुणानामनुसरणकला-
केलिनानावतारै-
स्त्रैलोक्यत्राणशीलां दनुजकुलवनी-
वह्निलीलां सलीलाम् ।
देवीं सच्चिन्मयीं तां वितरितविनम-
त्सत्रिवर्गापवर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ७ ॥

सिंहारूढां त्रिनेत्रां करतलविलस-
च्छंखचक्रासिरम्यां
भक्ताभीष्टप्रदात्रीं रिपुमथनकरीं
सर्वलोकैकवन्द्याम्
सर्वालङ्कारयुक्तां शशियुतमकुटां
श्यामलांगीं कृशांगीं
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ८ ॥

त्रायस्व स्वामिनीति त्रिभुवनजननि
प्रार्थना त्वय्यपार्था
पाल्यन्तेऽभ्यर्थनायां भगवति शिशवः
किन्त्वनन्या जनन्या ।

तत्तुभ्यं स्यान्नमस्येत्यवनतविबुधा-
हादवीक्षाविसर्गौ
दुर्गां देवीं प्रपद्ये शरणमहमशे-
षापदुन्मूलनाय ॥ ९ ॥
एतं सन्तः पठन्तु स्तवमखिलविप-
ज्जालतूलानलाभं
हृन्मोहध्वान्तभानुप्रतिममखिलस-
ङ्कल्पकल्पद्रुकल्पम् ।
दौर्गं दौर्गत्यघोरातपतुहिनकर-
प्रख्यमंहोगजेन्द्र-
श्रेणीपञ्चास्यदेश्यं विपुलभयदका-
लाहिताक्ष्र्यप्रभावम् ॥ १० ॥
॥ इति श्रीदुर्गास्तोत्रं सम्पूर्णम् ॥

## ॥ अथ रात्रिसूक्तं (तान्त्रिकम्) ॥

रात्रिदेवीं प्रपद्येऽहं शरणागतवत्सलाम् ।
कराळवदनां कृष्णां दुष्टग्रहविनाशिनीम् ॥ १ ॥

नमामि खड्गहस्तां तां खेटहस्तां भयानकाम् ।
वरदाभयहस्ताञ्च भक्तलोकभयापहाम् ॥ २ ॥

शूलहस्तां शंखचक्रगदाचापेषुधारिणीम् ।
चतुर्भुजामष्टभुजां द्विभुजामरिमर्दिनीम् ॥ ३ ॥

अष्टादशभुजां लक्ष्मीं दशहस्तां सरस्वतीम् ।
सर्वसम्पत्प्रदात्रीं च सर्वविद्याप्रदायिनीम् ॥

सहस्रबाहुचरणां सहस्रमुखलोचनाम् ।
सहस्रमकुटोपेतां सहस्रचरणांबुजाम् ॥ ५ ॥

पद्मयोनिमुखाब्जस्थां विष्णुवक्षःस्थले स्थिताम् ।
शिवाङ्कनिलयां गौरीं वन्दे मूर्तित्रयात्मिकाम् ॥

आभट्या वैष्णवी चोग्रा कुलानि विबुधद्विषाम् ।
या निर्दहति रक्ताक्षी तां वन्दे सिंहवाहनाम् ॥

मधुकैटभसंहारं महिषासुरमर्दनम् ।
याकरोन्नौमि दुर्गां तां वधं शुंभनिशुंभयोः ॥ ८ ॥

इन्द्रादिसर्वदेवानां सूर्यादिज्योतिषामपि ।
सर्वशक्तिस्वरूपाया रात्रिं तां प्रणमाम्यहम् ॥ ९ ॥

॥ इति रात्रिसूक्तं—तान्त्रिकम् ॥

## ॥ श्रीमहालक्ष्म्यष्टकम् ॥

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।
शंखचक्रगदाहस्ते महालक्ष्मि नमोस्तु ते ॥ १ ॥
नमस्ते गरुडारूढे कोलासुरभयङ्करि ।
सर्वपापहरे देवि महालक्ष्मि नमोस्तु ते ॥ २ ॥
सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि ।
सर्वदुःखहरे देवि महालक्ष्मि नमोस्तु ते ॥ ३ ॥
सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि ।
मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोस्तु ते ॥ ४ ॥
आद्यन्तरहिते देवि आदिशक्तिमहेश्वरि ।
योगजे योगसंभूते महालक्ष्मि नमोस्तु ते ॥ ५ ॥
स्थूलसूक्ष्ममहारौद्रे महाशक्तिमहोदरे ।
महापापहरे देवि महालक्ष्मि नमोस्तु ते ॥ ६ ॥

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि ।
पर[illegible]शि जगन्मातर्महालक्ष्मि नमोस्तु ते ॥
[illegible]ांबरधरे देवि नानालंकारभूषिते ।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोस्तु ते ॥
महालक्ष्म्यष्टकस्तोत्रं यः पठेद्भक्तिमान्नरः ।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥
एककालं पठेन्नित्यं महापापविनाशनम् ।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११ ॥
॥ इतीन्द्रकृतं श्रीमहालक्ष्म्यष्टकं सम्पूर्णम् ॥

---

... ॥ इति देवीमाहात्म्यं सम्पूर्णम् ॥ ...

---